पपदानां कृद्भिः सह समासो भवती'त्येषा परिभाषा न कर्तव्या भवति।

प्र.]च समासो योगद्वयविहितो विशेष्यते—'अतिङन्तः समासो भवती'ति। ते 'सुपे'त्यस्यैव निवृत्तिर्ज्ञाप्यते। सुब्ग्रहणं तु पूर्वपदस्य पदकार्यार्थमनुवर्त्त एव। भाष्येऽपि समुदायस्य निवृत्तिर्विवक्षिता, न तु केवलस्य 'सु'वित्यस्य। गति कारकोपपदानामिति। एतत्सूत्रद्वये 'सुपे'त्यस्य निवृत्त्या गतीनामुपपदानां च उत्तरपदात्सुबुत्पत्तेः प्राक्समाससिद्धिः। कारकाणां तु 'कर्तृकरणे कृता बहुल'मि समासः क्रियते। तत्र कृद्ग्रहणात्प्राक्सुबुत्पत्तेः समासः। तिङन्तेन तृतीयान्त सुपेत्यस्याऽनुवर्त्तनात्समासाऽप्रसङ्गात्कृदन्तेनैव समासे सिद्धे कृद्ग्रहणं कृदन्तावस्था मेवाऽनुत्पन्ने सुपि समासार्थम्। अस्याश्च परिभाषायाः 'पुंयोगादाख्याया'मित्य प्रयोजनानि वक्ष्यन्ते। यदि तर्ह्युत्तरपदात्सुब्नोत्पद्यते तदा दधिसेचावित्यादौ पद दित्वाऽभावात्षत्वप्रतिषेधो न प्राप्नोति। पदत्वाऽभावादुत्तरपदव्यपदेशश्च न, तद तन्निबन्धनः स्वरो न सिद्ध्यति। नैष दोषः। निरुपपदात्सेचयतेः क्विपि कृते प समासः क्रियत इति षत्वनिषेधो भविष्यति। यद्वा 'सुपे'त्यस्य निवृत्तौ स यथेष्टं कार्यसिद्धये क्वचिदुत्पन्ने सुपि समासः, क्वचित्प्राक्सुबुत्पत्तेः। एवं कारक

उ.]मान्ततया समास एव विशेष्यते। अतिङिति बहुव्रीहिः। 'प्रपचतितरा'मित्य नित्यसमास इष्ट एव। 'तिङि चोदात्तवती'त्यनेन गतेर्निघातेऽन्तोदात्तत्वमेव। त एतत्सिद्ध्यर्थमेवाऽतिङ्ग्रहणं प्रत्याख्यातं भाष्ये। 'गतिकारके'ति स्वरस्य तु प्रवृत्तिः, कृद्ग्रहणात्। कृद्ग्रहणप्रत्याख्यानं तु न भाष्यारूढमिति तत्रैव वक्ष्याम एतेन "तत्र नित्यसमासवारणायाऽतिङिति तद्घटितप्रतिषेधायावश्यकमिति क तत्र तन्निवृत्तिज्ञापकम्। 'प्रपचतितरा'मित्यादौ च 'गतिकारकोपपदा'दिति 'ति चोदात्तवती'ति सूत्रभाष्यप्रामाण्येनोदात्तवतेत्यादिवार्त्तिकोक्तो वैकल्पिकसमास ष्यते" इति परास्तम्। सुब्ग्रहणं त्विति। 'उपपद'मित्यन्वर्थसंज्ञया सुबन्त पदत्वेनोपपदत्वाद्गतेः सुबन्तत्वाच्च 'राजयुध्वे'त्यादौ पूर्वपदे नलोपादिपदकार्यसि 'तिङघटित' इति समासविशेषणेन 'कारको व्रजती'त्यादिव्यावृत्तिसिद्धेः प्रथमा सुबनुवृत्तेरपि फलाऽभावेन चिन्त्यमेतत्। कृदन्तावस्थायामेवेति। 'प्र पचतितरा'मित्यादिवारणाय कृद्ग्रहणस्यावश्यकत्वेन चिन्त्यमिदमिति कश्चित्, त बहुलग्रहणेन शानजन्तादिभिरिव तेनापि समासस्य वारयितुं शक्यत्वात्। परि भाषायाः प्रयोजनवत्त्वे ह्यतिङ्ग्रहणं प्रयोजनवत्स्यादत आह—अस्याश्चेति। तन्नि बन्धनः स्वर इति। 'गतिकारकोपपदात्कृ'दिति विहित इत्यर्थः। स्वराऽसिद्धय राह—यद्वेति। सुपेत्यस्य निवृत्ताविति। सुपैवेति नियमाऽभावाद्यथेष्टं सम

१ क्वचित्।

यद्येतज्ज्ञाप्यते केनेदानीं समासो भविष्यति ? ॥ समर्थेन ॥ यद्येवं धातूपसर्गयोरपि समासः प्राप्नोति—पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेनेति ॥ नैतदस्ति । 'पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण' । साधनं हि क्रियां निर्वर्त्तयति तामुपसर्गो विशिनष्टि । अभिनिर्वृत्तस्य चार्थस्योपसर्गेण विशेषः

प्र.]समासोपि बहुलग्रहणात्क्वचित्सुबुत्पत्तेर्भवतीति 'सा हि तस्य धनक्रीते'ति प्रयोग उपपन्नः । उत्तरपदशब्दः समासाऽवयवविशेषस्य रूढिरिति तत्राऽप्यदोषः। यद्येतदिति । शब्देनोत्तरपदस्याऽनुपादानात् प्रश्नः । समर्थेनेति । सुबित्यस्याऽनुवृत्तौ सत्यां समासस्य पदविधित्वात्समर्थपरिभाषोपस्थानात् । यद्येवमिति । ततश्चैकस्वर्यादिप्रसङ्गः, शाकलप्रतिषेधप्रसङ्गश्च । पूर्वं धातुरुपसर्गेणेति। ततस्तयोः सामर्थ्यमस्ति, उपसर्गार्थविशिष्टायाः क्रियायाः साधनेन योगात्। पूर्वं धातुः साधनेनेति । ततश्च पूर्वं साधनाभिधायिप्रत्ययोत्पत्तिः, पश्चात्साधनसंसृष्ट एव धातुरुपसर्गेण युज्यते न केवल इति धातूपसर्गयोः समासाऽभावः।तत्र कृदन्तेन समासो भवत्येव, तिङन्तेन त्वतिङिति निषेधान्न भवति । यत्र तु तिङन्तेन समास इष्यते स विषयो दर्शितः—उदात्तवतेति । अभिनिर्वृत्तस्येति । अनिष्पन्नस्य विशेषा-

उ.]सिद्धिरिति भावः। लक्ष्यानुसारेण च व्यवस्थेति बोध्यम्।तत्र 'सुबुत्पत्तेः प्रा'गित्युपलक्षणं,लिङ्गबोधकप्रत्ययोत्पत्तेः प्रागपीति बोध्यम्।सुबुत्पत्तेर्भवतीति। सुबुत्पत्तेरनन्तरमित्यर्थः । धनक्रीतेति । सुप्टाबुत्पत्तेः पूर्वं समासे 'क्रीतात्करणे'तिङीप् स्यात् । सुबन्तेन तु समासेऽन्तरङ्गत्वाट्टाप्सिद्ध्यतीति भावः । यत्र सुबुत्पत्तेः पूर्वं समासस्तत्र स्वराऽप्राप्तेराह—उत्तरपदशब्द इति । सुबित्यस्येति । तदननुवृत्तावपि प्रागुक्तरीत्या पदविधित्वं बोध्यम्। 'सुपे'त्यस्याऽननुवृत्तावतिप्रसङ्गमाह भाष्ये—यद्येवमिति । कुगतीत्यनेनेति भावः । अतिङित्यनेन तिङन्तस्यैव प्रतिषेध इति तात्पर्यम् । ऐकस्वर्यादीति । आदिनैकपद्यम् । किं च तयोः समासे प्रातिपदिकतया परत्वात्सुबुत्पत्तिरेव स्यान्न तिङित्यपि बोध्यम् । पूर्वं धातुरुपसर्गेणेति । तत्संज्ञकशब्देनेत्यर्थः।पूर्वं साधनेन योगेऽपि उपसर्गस्य क्रियाविशेषकत्वाऽविशेषात्सामर्थ्यस्य दुर्वारत्वमित्यत आह—ततश्च पूर्वमिति । साधनसंसृष्ट एवोपसर्गेण युज्यत इति केवलेन सामर्थ्याऽभाव इति भावः । न च 'निष्कृष्यैकार्थीभावो न समासादिप्रयोजक' इत्युक्तम्, एवं च विशिष्टेनैकार्थीभावेऽवयवानामपि तत्सत्त्वात्स दुर्वार इति वाच्यं,तिङन्तेनैकार्थीभावाऽभावात्,अतिङिति निषेधात् ,तदवयवेन तु प्रत्ययार्थाऽसंसृष्टेन नैकार्थीभावः, साधनसंसृष्टार्थस्यैवोपसर्गेण योगादित्यदोषात् । भाष्ये—साधनं हि क्रियां निर्वर्त्तयतीति । क्रियां—तत्प्रतीतिं, साध्यत्वेन प्रतीतेः

१ 'सुबुत्पत्ते' । २ 'तेनैकार्थीभावात्' ।

शक्यो वक्तुम्॥*॥षष्ठीसमासादुपपदसमासो विप्रतिषेधेन॥*॥ षष्ठीसमासादुप-
पदसमासो भवति विप्रतिषेधेन। षष्ठीसमासस्यावकाशः—राज्ञः पुरुषो राज-
पुरुषः। उपपदसमासस्याऽवकाशः—स्तम्बेरमः कर्णेजपः।इहोभयं प्राप्नोति-
कुम्भकारो नगरकारः।उपपदसमासो भवति विप्रतिषेधेन*॥न वा षष्ठीसमासा-
ऽभावादुपपदसमासः॥*॥न वाऽर्थो विप्रतिषेधेन॥किं कारणम्?॥['षष्ठीसमास...

प्र.]काङ्क्षाया अभावात्, अनुभूयते सुखमुपास्यते गुरुरित्यादौ धातुरेव सकर्मिका
क्रियां वक्ति, उपसर्गस्तु द्योतक इति नाति कश्चिदस्मिन् पक्षे दोषः।

षष्ठीसमासादिति नित्यत्वाऽनित्यत्वाभ्यामनयोर्विरोधसद्भावः।कुम्भकारादि...
पक्षके प्रातिपदिकार्थे प्रातिपदिकेनैव कर्मण उक्तत्वात्तत्रैवोपपदेऽणा भाव्यम्
अपवादविषयत्वाद्द्वितीयानुत्पादात्। कृते चाऽणि कर्तृकर्मणोरिति षष्ठी भवतीत्यनु...
भयप्रसङ्गः। गतिकारकेति। ततश्चोत्तरपदे विभक्त्युत्पत्त्यनपेक्षणादन्तरङ्गत्वा...

उ.]तत्संबन्धाधीनत्वात् साध्यत्वेन प्रतीतार्थकयोगे च तेषामुपसर्गत्वादीति भा...
अभिनिर्वृत्तस्य। अभिनिर्वृत्तज्ञानविषयस्येत्यर्थः। अनिष्पन्नस्येति। अज्ञातस्ये-
त्यर्थः।नन्वेवमुपसर्गसम्बन्धात्प्राक्केवलभ्वासादेः सकर्मकत्वाऽभावेन कर्मणि ल...
न स्युरत आह—अनुभूयते सुखमिति। धातुरेवेति। केवलधातुरेवेत्यर्थः
उपसर्गस्तु द्योतक इति। स च श्रोतृबोधाय पश्चादेव सम्बध्यते इति भावः। ए...
नोपसर्गाणां द्योतकत्वेऽपि तद्द्योत्यार्थस्य साधनसम्बन्धात्पूर्वमेव धातुना बोध...
वश्यकत्वेन धातूपसर्गयोः सामर्थ्यसत्त्वेन समासो दुर्वार इत्यपास्तम्। ए...
सुड्कादित्यत्र विस्तरेणोपपादयिष्यते। 'विपराभ्यां जे'रित्यादौ व्यादिद्योत्यार्थप्रति...
कस्येत्यर्थः, विपराभ्यां परत्वयोग्यस्येत्यर्थो वा॥

विरोधसद्भाव इति। 'इत्यभिमान' इति शेषः।अभिमानत्वं चाऽस्याऽनुपद...
स्फुटीकरिष्यते। ननु कर्मण्युपपदेऽण्, कर्मत्वं च विभक्त्या गम्यं, तत्राऽणुत्प...
पूर्वं कृदन्तत्वाऽभावात्षष्ठ्या अप्राप्तौ द्वितीययैव भाव्यमिति जातेऽपि अणि त...
वृत्तौ मानाऽभाव इति कुतः षष्ठीसमासप्राप्तिरत आह—पक्षके इति प्रातिपदिका...
पदत्वाऽभावादुपपदत्वं कथमिति चिन्त्यमेतत्। 'सुबन्तमेवोपपद'मिति 'त...
पपद'मितिसूत्रे भगवान्वक्ष्यति, स्वयं च। किं च पक्षकपक्षेपि सकलकारक...
मानर्थः संमुग्धाकारेणैव प्रातिपदिकेनोच्यते न तु विशिष्येति कर्मोपपदत्वप्रयु...
ऽणोऽप्राप्तिः। अन्यथा करणाद्युपपदेपि कर्मोपपदप्रसङ्गः, तस्माद्वस्तुतः कृत्प्रकृ...
कर्मत्वसत्त्वेन कृदनुत्पत्तावपि भावितत्त्वं गृहीत्वा षष्ठीप्रवृत्तिरित्येव भाष्या...
उचितः। अन्तरङ्गत्वादिति। 'षष्ठी'ति सूत्रे 'सुपे'ति तृतीयान्तस्य संबन्धा...

१ 'समासस्या'। २ क्वचित्। ३ ...

भावादुपपदसमासः']।षष्ठीसमासस्याऽभावादुपपदसमासो भविष्यति॥कथम्?॥ 'गतिकारकोपपदानां कृद्भिःसह समासवचनं प्राक्सुबुत्पत्ते'रिति समासवचनात्॥

अथ वा विभाषा षष्ठीसमासो यदा न षष्ठीसमासस्तदोपपदसमासो भविष्यति॥अनेनैव यथा स्यात्तेन मा भूदिति॥कश्चात्र विशेषः—तेन वा स्यादनेन वा ?॥ अयमस्ति विशेषः—उपपदसमासो नित्यसमासः, षष्ठीसमासः पुनर्विभाषा॥ननु च नित्यं यः समासः स नित्यसमासो यस्य विग्रहो नास्ति॥'ने'-त्याह । नित्याधिकारे यः समासः स नित्यसमासः॥ नैवं शक्यम् । अव्ययीभावस्य ह्यनित्यसमासता प्रसज्येत । तस्मान्नित्यः समासो नित्यसमासो

प्र.]पपदसमासो भवतीत्यर्थः । अथ वेति । षष्ठीसमासेऽपि दोषाऽभाव इत्यर्थः । क्वचित्कार्ये दोषदर्शनादाह—अनेनेति । 'सिन्नित्यसमासयो'रित्यत्र नित्यसमासग्रहणेनाऽस्य ग्रहणं यथा स्यात् 'अन्तोदात्तादुत्तरपदा'दित्यत्राऽनित्यसमासग्रहणेनास्य ग्रहणं मा भूदिति भावः । यस्य विग्रहो नास्तीति । अस्यापि विग्रहाऽभावः, षष्ठीसमासेन मुक्ते पक्षे उपपदसमाससद्भावात् । नित्याधिकार इति । नित्यशब्दस्य स्वरितत्वप्रतिज्ञानात्तदधिकारसंप्रत्ययः । नैवं शक्यमिति । नित्यशब्दस्य स्वरितत्वं दोषवत्त्वान्न प्रतिज्ञायते इत्यर्थः । तदेवं प्रयोजनाऽभावा-

उ.]भावः। अत एव 'मातुः स्मरती'त्यादौ न षष्ठीसमासः।अत एव च षष्ठ्यन्तस्याऽनेकसुबन्तेन न समास इति बोध्यम् । एतद्वार्त्तिकद्वयमपि प्रत्याचष्टे—अथवेति भाष्ये । 'विप्रतिषेधे पर'मित्यस्य तु न प्रवृत्तिः, युगपदुभयविहिततत्पुरुषसमाससंज्ञयोः प्रवृत्तिसंभवेनाऽसंभवरूपविप्रतिषेधाऽभावात् । 'उपपदसमासो भविष्यती'-त्यस्योपपदमिति सूत्रविहितसमाससंज्ञा, तत्पुरुषसंज्ञा च स्थास्यतीत्यर्थः । अन्यादृशविरोधस्य तत्प्रवृत्तिनिमित्तत्वे न मानमिति तात्पर्यम् । न च नित्यत्वाऽनित्यत्वज्ञानयोर्विरोधः, बोधे बाधज्ञानस्याऽप्रतिबन्धकत्वात्। एवं च षष्ठीसमासोऽपि नित्य एवैतद्विषये फलितः,तद्बोधिताऽभावांशस्यैतद्विरोधेनैतद्विषये त्यागात् ,'नित्यं क्रीडे'-त्यादिविषये तस्य क्लृप्तबाधत्वात् । 'गतिकारकोपपदा'दित्यत्र प्रकृतपरिभाषायां च लक्षणप्रतिपदोक्तपरिभाषा न प्रवर्त्तते इति षष्ठीसमासोऽपि सुबुत्पत्तेः पूर्वमेव । स्वरश्च तत्रापि समासे इत्यन्तरङ्गत्वमेव नास्तीति भावः । परिभाषायां सामान्यतः कारकपदोपादानेन कारकविभक्त्यन्तसमासमात्रस्य सुबुत्पत्तेः प्राक् कृद्भिर्लाभादिति बोध्यम् । कैयटे 'सिन्नित्यसमासयो'रित्यादि'यथा स्या'दित्यन्तोऽग्रन्थः,बहुषु पुस्तकेष्वनुपलम्भात्तत्र नित्यग्रहणप्रत्याख्यानाच्च । उत्तरपदेति । एवं चाऽग्निचितेत्यादौ विभक्त्युदात्तत्वमपि स्यादिति भावः । [ उपपदमतिङ् ] ॥

१ क्वचिन्न । २ 'रिति वचनात्' । ३ 'मा भूत् कश्चा' । ४ वार्त्तिकमित्यन्ये ।

यस्य विग्रहो नास्ति ॥ [ उपपद ] ॥

### अमैवाव्ययेन ॥ २।२।२० ॥

एवकारः किमर्थः ? ॥*॥ [ एवकारो ] नियमार्थः ॥*॥ नैतदस्ति प्रयोजनम्।सिद्धे विधिरारभ्यमाणोऽन्तरेणाऽप्येवकारं नियमार्थो भविष्यति॥इष्टतोऽवधारणार्थस्तर्हि भविष्यति। यथैवं विज्ञायेत–'अमैवाव्ययेने'ति, मैवं विज्ञायि–'अमाऽव्ययेनैवे'ति ॥ अस्ति चेदानीं कश्चिदनव्ययमम्शब्दो यदर्थो विधिः स्यात् ? ॥ अस्तीत्याह–खशयं ब्राह्मणकुलमिति ॥ नैतदस्ति प्रयोजनम्। अन्तरङ्गत्वादत्र समासो भविष्यति ॥ इदं तर्हि प्रयोजनम् 'अमैव तुल्यविधानमुपपदं तत्र यथा स्यादमा चान्येन च यत्तुल्यविधानं तत्र मा भूदिति। अग्रे भोजम्। अग्रे भुक्त्वा। अग्रादिष्वप्राप्तविधेः समासप्रतिषेधं चोदयिष्यति स न वक्तव्यो भवति॥ [ अमैवाव्ययेन] ॥

### शेषो बहुव्रीहिः ॥ २।२।२३ ॥

'शेष' इत्युच्यते कश्च शेषो नाम ? ॥ येषां पदानामनुक्तः समासः

---

प्र.] द्विप्रतिषेधो न पठितव्यः ॥ [ उपपदमतिङ् ] ॥

अमैवाव्ययेन। यदर्थ इति। यन्निवृत्त्यर्थो नियमः स्यादित्यर्थः। खशयमिति। 'अधिकरणे शेते'रित्यच्। 'अतोऽ'मिति सोरम्भावः। अनेनाऽनव्ययेनाऽमा समासो मा भूदित्येवमर्थोऽयं नियमः स्यात्। अन्तरङ्गत्वादिति। अनुत्पन्न एव सावुपपदसमासेन भाव्यं, पश्चात् सुनेति समासविधानकालेऽनव्ययस्याऽमोऽसंभवान्नियमान्तरे च तस्य चरितार्थत्वाद्विपरीतनियमो न भविष्यतीत्यर्थः। अमैवेति। एवकारसामर्थ्यादमेत्यस्यावृत्तिराश्रीयते। ततो येन वाक्येऽनामेव केवलो विधीयते न प्रत्ययान्तरसहितस्तेन वाक्येन यद्विधीयते उपपदं तत्र सप्तमीनिर्दिष्टं तदमा समस्यते नाऽन्यदित्यर्थः। अग्रे भोजमिति। 'विभाषाग्रेप्रथमपूर्वेषु' इति द्वयोः क्त्वाणमुलोर्विधानादत्र समासो न भवति। अग्रादिष्विति। यतोऽप्राप्तविभाषा

---

उ] अमैवा। नन्वेवं वचनवैयर्थ्यमतस्तत्सामर्थ्यात्सुबुत्पत्त्यनन्तरमपि समासो ज्ञाप्यते इत्यत आह—नियमान्तरे इति। वक्ष्यमाणे इत्यर्थः। अमेत्यस्यावृत्तिरिति। चिन्त्यमेतत्। आवृत्तौ मानाऽभावात्।अमैव तुल्यविधानं यदुपपदं तदेवाऽव्ययेन समस्यते इत्यर्थे 'अग्रेभुक्त्वे'त्यत्र समासापत्तिरव्ययग्रहणवैयर्थ्यापत्तिश्च। किं च 'कालो भोक्तु'मित्यत्र समासापत्तिः। तस्मादमैव तुल्यविधानं यदुपपदं तदव्ययेनेति नियमेन सर्वेष्टसिद्धिः। अत एव भाष्ये'ऽग्रे भुक्त्वे'त्यप्युदाहृतम्। 'अग्रादिष्वप्राप्तेति' वार्तिकप्रत्याख्यानं च सङ्गच्छते इत्याहुः। 'अप्राप्तविधे'रिति

---

१ लुप्तं स्यात्। २ भाष्यमिदमित्यन्ये। ३ 'अन्तरेणैवका'। 'रभ्यमाणोऽप्यन्तरेणै'। ४ क्वचिन्न। ५ 'सुपेति'। ६ 'वचनस्य'

शेषः ॥*॥ शेषवचनं पदतश्चेन्नाऽभावात् ॥*॥ शेषवचनं पदतश्चेत्तन्न ॥ किं कारणम् ? ॥ 'अभावात्' । नहि सन्ति तानि पदानि येषां पदानामनुक्तः समासः ॥*॥ अर्थतस्तर्हि ॥*॥ अर्थतस्तर्हि शेषग्रहणं—येष्वर्थेषु अनुक्तः समासः स शेषः ॥*॥ अर्थतश्चेदविशिष्टम् ॥*॥ अर्थतश्चेदविशिष्ट-मेतद्भवति ॥ कुतः?॥ पदतः। नहि सन्ति तेऽर्था येष्वर्थेष्वनुक्तः समासः ॥ ॥[*त्रिकतस्तर्हि*]॥ त्रिकतस्तर्हि शेषग्रहणम् । यस्य त्रिकस्यानुक्तः समासः स शेषः ॥ कस्य चानुक्तः? ॥ प्रथमायाः ॥ ॥ इति श्रीभगवत्पतञ्जलिविर-चिते व्याकरणमहाभाष्ये द्वितीयस्याध्यायस्य द्वितीये पादे प्रथममाह्निकम् ॥

## अनेकमन्यपदार्थे ॥ २।२।२४ ॥

---

प्र.]ततः प्रत्ययोत्पत्तावग्रादीनां निमित्तत्वान्निमित्तस्योपपदत्वात्समासप्रसङ्गः।प्राप्तविभा-षायां त्वग्रादीनां प्रत्ययोत्पत्तावनिमित्तत्वात्तन्निवृत्तावेव हेतुत्वात्तस्यानुपपदत्वमित्यर्थः।

शेषो बहुव्रीहिः। पदस्याऽर्थस्य च सर्वस्योपयुक्तत्वाच्छेषमसंभाव्य पृच्छति—शेष इति । पदतश्चेदिति । पदेन 'पदत' इत्याद्यादित्वात्तसिः। नहीति । सर्वेषां सामान्यविशेषरूपेणोपयुक्तत्वादित्यर्थः । नहि सन्त्यर्था इति । पूर्वोत्तरान्यपदार्थेषु तत्पुरुषाऽव्ययीभावविधानात् । प्रथमाया इति। द्वितीयादीनां प्रतिपदं समासविधा-नात्प्रथमायाः शेषत्वम् । ततश्च प्रथमान्तानां पदानां बहुव्रीहिरित्यर्थात्समानाधिक-रणानां भवति । 'कण्ठेकाल' इत्यादौ 'सप्तमीविशेषणे' इति पूर्वनिपातविधाना-ज्ज्ञापकाद्भवति । इत्युपाध्यायजय्यटपुत्रकैयटकृते भाष्यप्रदीपे द्वितीयस्याध्यायस्य द्वितीये पादे प्रथममाह्निकम् । २।२।१।

---

उ.]विशेषणव्यावर्त्यमुपपादयति—प्राप्तविभाषायां त्विति। 'आभीक्ष्ण्य' इत्यनुवृत्त्या हि सा, तस्मिंश्च सत्येव प्रत्यय इत्याद्युक्तेः प्रत्ययोत्पत्तिसंनियोगेनैवोपपदसंज्ञा-स्वीकारादिति भावः ॥

शेषो ब । उपयुक्तादन्यः शेषः। सामान्यम् । 'सह सुपे'त्यादिः। विशेषः—द्वितीयाश्रिते'त्यादिः । पूर्वोत्तरेति । यद्यप्यन्यपदार्थवत् पूर्वोत्तरपदार्थयोस्तद्विधानं नाऽस्मच्छास्त्रे तथाप्यव्ययीभावादिमहासंज्ञाबलेन पूर्वाचार्यपरिगृहीतार्थस्य निमित्त-त्वमस्त्येवेत्यभिप्रायः । 'विशेषणं विशेष्येणे'त्यादौ प्रथमाया अप्युपयुक्तत्वमित्यत आह—द्वितीयादीनामिति। 'गतार्थे प्रथमये'त्यादि तु व्याख्यानभूतं ,न स्वतन्त्र-विधायकमिति भावः। यद्वा शेष इत्यस्य प्रथमान्तत्वात्प्रथमान्तगृहीतत्रिकस्य प्रति-पदमुच्चारितस्यैव ग्रहणमिति सर्वेष्टसिद्धिः।इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्ट-कृते भाष्यप्रदीपोद्द्योते द्वितीयाध्यायस्य द्वितीयपादे प्रथममाह्निकम् ॥२।२।१॥

---

१ इदं लुप्तं स्यादिति गौडाः । २ क्वचिन्न । ३ 'मुच्चरित' ।

पदग्रहणं किमर्थम् ? ॥ [इह] अनेकमन्यार्थे' इतीयत्युच्यमाने वाक्यार्थेऽपि बहुव्रीहिः स्यात्–'यथा मे माता तथा मे पिता सुस्नातं भो' इति। पदग्रहणे पुनः क्रियमाणे न दोषो न भवति ॥ अथाऽन्यग्रहणं किमर्थम्? 'अनेकं पदार्थे' इतीयत्युच्यमाने स्वपदार्थेऽपि बहुव्रीहिः स्यात्–राजपु

प्र.] अनेकमन्य । अनेकग्रहणस्य वार्तिककारः प्रयोजनं वक्ष्यतीति भाष्यकारः पदग्रहणस्याऽन्यग्रहणस्य च प्रयोजनमाचष्टे । बहुवक्तव्यत्वाच्च पश्चादन्यग्रहण विचारः । पदग्रहणमिति । 'अन्यार्थे' इत्युच्यमाने स्वपदार्थव्यतिरिक्तेऽर्थे आश्रीयमाणेऽन्यपदार्थो लभ्यते । वर्तिपदानां च क्रियालक्षणे वाक्यार्थे वृत्त्य संभवात्तन्निवृत्त्यर्थमपि पदग्रहणं नोपयुज्यत इति प्रश्नः । यथा मे मातेति कश्चित्केन चित्पृष्टः 'कीदृशः कुलशीलादिना तव पिते'ति,स आह–'यथा मे माते' ति।एतानि पदानि 'तथा मे पिते'त्यन्यस्य वाक्यस्याऽर्थं गमयन्तीति समासप्रस अथ वा 'स्नाही'ति कश्चित्केनचिदुक्तस्तं प्रत्याह—'यथा मे माते'त्यादि। य शुद्धकुला मे माता तथा पिताऽपीत्यभिजनशुद्धिरपि स्नानं,किं वाह्येन स्नानेनेत्यर्थः ततः 'सुस्नातं भो' इत्येतद्वाक्यार्थे वर्त्तमानानां यथाप्रभृतीनां पदानां समासाऽभाव पदग्रहणम् । अश्रुतवाक्यार्थे च पदानां वृत्तिर्दृश्यते, यथा नद्यां सिष्णासुः क दुच्यते—'नद्यां ग्राहाः सन्ती'ति । तस्माच्च 'मा स्नासी'रिति वाक्यार्थः प्रतीय

अथान्यग्रहणमिति। अन्तरङ्गत्वात्स्वपदार्थे समासे सिद्धे पदार्थग्रहणसामर्थ्या दन्यपदार्थो लप्स्यत इति प्रश्नः । स्वपदार्थेपीति। अपिशब्दादन्यपदार्थेऽपीत्यर्थः पदार्थग्रहणं व्याप्तिसमाश्रयणार्थं स्यादिति स्वपदार्थाऽन्यपदार्थयोः समासः स्या

उ.] अनेकम । भाष्ये क्रमोल्लङ्घनेऽभिप्रायमाह—अनेकेति। अन्यपदार्थो लभ्य इति। 'अन्यार्थे' इत्यस्य भिन्नेऽर्थ इत्यर्थः।भेदप्रतियोगी चोपस्थितः स्वपदार्थ ए पर्युदासविधया च स पदार्थ एवेति भावः । वाक्यव्यावर्त्तकं युक्त्यन्तरमाह— वर्त्तीति । तेषां सुबन्तत्वादित्यभिमानः। एतानि पदानीति । समानाधिकरण मित्यनपेक्ष्येदम्। वस्तुतोऽर्थपरमेतत् , 'यथा मदीया माते'त्यत्र समासप्रसङ्ग इ बोध्यम् । 'सुस्नातं भो' इतिपाठे आह—अथ वेति । अत्र सर्वत्राऽन्यार्थो व्य इति बोध्यम्।'अभिजनशुद्धिरपी'त्यपिरेवार्थे।भाष्ये 'वाक्य'शब्देन पदसमूहमात्र

व्याप्तिसमाश्रयणेति । पदार्थग्रहणसामर्थ्याद्व्याप्तिन्यायस्यैवानुसरणं, नान्त रङ्गन्यायस्येत्यर्थः। राजानं पुरुषमित्यर्थे सावकाशस्तत्पुरुषः, बहुव्रीहिरपि बहुस्व सावकाश इति प्रथमान्तपदद्वयेन विग्रहे परत्वात्स्वपदार्थेऽपि बहुव्रीहिः प्राप्नोति तद्व्यावृत्त्यर्थमन्यग्रहणम् , त्रिकतश्चात्र शेष इति भावः। भाष्ये एकदेशमाह—

१ क्वचिन्न । २ 'पितेति सुस्नातं' । ३ 'पदे' ।

तत्पुरुष इति ॥ नैतदस्ति प्रयोजनम्। तत्पुरुषः स्वपदार्थे बाधको भविष्यति ॥ भवेदेकसंज्ञाधिकारे सिद्धम्। परंकार्यत्वे तु न सिध्यति। आरम्भसामर्थ्याच्च तत्पुरुषः, परंकार्यत्वाच्च बहुव्रीहिः प्राप्नोति॥ परंकार्यत्वे च न दोषः, शेष इति वर्त्तते। अशेषत्वान्न भविष्यति ॥*॥ शेषवचन उक्तम् ॥*॥ [शेषवचने उक्तम् ]॥ किमुक्तम् ?॥ 'तत्र शेषवचनाद्दोषः सङ्ख्यासमानाधिकरणनञ्समासेषु बहुव्रीहिप्रतिषेध' इति॥ अथैकसंज्ञाधिकारे नार्थोऽन्यग्रहणेन ?॥ एकसंज्ञाधिकारे च कर्तव्यम्। अक्रियमाणे ह्यन्यग्रहणे यथैव तत्पुरुषः स्वपदार्थे बहुव्रीहिं बाधते एवमन्यपदार्थेऽपि बाधेत ॥ अथाऽनेकग्रहणं किमर्थम् ?॥ 'अन्यपदार्थे' इतीयत्युच्यमाने एकस्यापि पदस्य बहु-

प्र.] तत्पुरुष इति। बहुव्रीहेस्त्वन्यपदार्थोऽवकाशः। परंकार्यत्वाच्चेति। ततश्च संज्ञयोः समावेशात्स्वरसमासान्तप्रसङ्गः। शेषवचन इति। शेषग्रहणप्रत्याख्यानं स्मारयति। सङ्ख्येति। द्वीरावतीको वीरपुरुषकोऽब्राह्मणको देश इति समासविधावुपयोगादशेषत्वाद्बहुव्रीहिर्न प्राप्नोति, तस्माच्छेषग्रहणं न कर्तव्यम्। ततः स्वपदार्थे बहुव्रीहिनिवृत्त्यर्थमन्यग्रहणं कर्तव्यमिति स्थितम्। अक्रियमाण इति। 'नीलोत्पलं सर' इत्यत्रापि विशेषाऽनुपादानादन्यपदार्थेऽपि स्वपदार्थ इव तत्पुरुषो बहुव्रीहिं बाधेत, 'कण्ठेकाल' इत्यादिश्च व्यधिकरणपदो बहुव्रीहेरवकाशः स्यात्। अन्यग्रहणे तु सति स्वपदार्थे सावकाशं तत्पुरुषं परत्वाद्बहुव्रीहिर्बाधत इति न कश्चिद्दोषः। अथेति। एकनिवृत्त्यर्थं तावदनेकग्रहणं नोपपद्यते। पदविधित्वात्सामर्थ्ये सति बहुव्रीहिसंज्ञाविधानादनेकाधिष्ठानत्वाच्च सामर्थ्यस्य। नापि बहूनां समा-

उ.] दस्तीत्यादि। तत्पुरुषः,—समानाधिकरणतत्पुरुषः राजपुरुष इत्यादिरपि कर्मधारय एव। इतर एकदेश्याह—भवेदित्यादि। स्वरसमासान्तेति। पर्यायेणेत्यर्थः। यद्वा कस्य चित्स्वरः, कस्यचित्समासान्त इत्यर्थः। भाष्ये—अशेषत्वान्न भविष्यतीति। पदतोऽर्थतो वा शेष इत्यभिमानः। एतदर्थकं शेषग्रहणं प्रत्याख्यातमित्याह—प्रत्याख्यानमिति। आकडारसूत्रोक्तमित्यर्थः। पदतोऽर्थतश्च शेषे द्वीरावतीके दोषः, पदत एव शेषे वीरपुरुषकादौ दोषः। समासविधाविति। 'सङ्ख्यावंश्येन', 'नदीभिश्च', 'अन्यपदार्थे च संज्ञायां', 'मध्यमध्यमवीराश्च', 'न'ञित्यत्रेति भावः। पदतोऽर्थतश्च शेषार्थकस्य तस्य प्रत्याख्याने 'परंकार्य'मिति पाठेऽन्यग्रहणमावश्यकमित्याह—तत इति। नीलोत्पलं सर इति। इदमुपलक्षणं बहुपदकबहुव्रीहिः स्वपदार्थेपि स्यादित्यपि बोध्यम्। परिनिष्ठितविभक्त्या समासमजानतो भाष्ये—'अक्रियमाणे' इत्याद्युक्तिरिति बोध्यम्। कण्ठेकाल इत्यादिश्चेति।

१ चः क्वचिन्न। २ इदं भाष्यमित्यन्ये। ३ 'त्वेऽपिन'। ४ लुप्तं स्यात्। ५ 'आकडारादेके' त्यत्रोक्तम्। ६ 'हेः प्रति'। ७ 'कारेऽपिक'। ८ 'बाधते'।

व्रीहिः स्यात्—सर्पिषोऽपि स्यात्, मधुनोऽपि स्यात् गोमूत्रस्यापि स्यात्॥ नैतदस्ति प्रयोजनं 'सुप्सुपे'ति वर्तते ॥ इदं तर्हि प्रयोजनं बहूनां समासो यथा स्यात्—'सुसूक्ष्मजटकेशेन सुनताजिनवाससा। समन्ताच्छितिरन्ध्रेण द्वयोर्वृत्तौ न सिध्यति'॥ [ ॥*॥ उत्तरार्थञ्च ॥*॥ ] उत्तरार्थं चाऽनेकग्रहणं कर्तव्यं—'चार्थे द्वन्द्वः'। 'अनेक'मिति। इहापि यथा स्यात्—'प्लक्षन्यग्रोधधवखदिरपलाशा' इति॥ एतदपि नास्ति प्रयोजनम्। आचार्यप्रवृत्तिर्ज्ञापयति 'बहूनामपि समासो भवती'ति, यदयम्—उत्तरपदे द्वि…

प्र.]सार्थमनेकग्रहणं,तद्धितार्थेत्यनेन उत्तरपदे परतः समानसंज्ञाविधानाज्ज्ञापका… द्बहूनां बहुव्रीहेः सिद्धत्वादिति प्रश्नः। सर्पिषोऽपि स्यादिति। अपिशब्दो बिन्द्व… वर्तते इति तस्यापि बहुव्रीहिसंज्ञाप्रसङ्गः। ततश्च कप्समासान्तप्रसङ्गः। पदान्तरं 'स्या'दित्यनेन चाऽस्य सामर्थ्यमस्तीति समर्थपरिभाषापि न व्यावृत्तिं करोतीति केचिद्याचक्षते। अन्ये त्वाहुः—'अपिः पदार्थे'त्यत्राप्यर्थता बिन्द्वादेर्निराकृ… तस्मात्स्यादितिपदं बिन्द्वर्थे वर्तत इति तस्य बहुव्रीहिसंज्ञाप्रसङ्गः। अतिङ्ग्रहणे… पूर्वमेव 'सुप्सुपे'त्यस्य विच्छिन्नत्वादेकस्यापि तिङन्तस्य प्राप्तिः स्यात्। … दिति। योगद्वय एवाऽतिङ्ग्रहणेन सुप्सुपेत्यस्याऽसंबन्धो ज्ञापितोऽन्यत्र सुप्सुपे… नुवर्त्तत एवेत्यर्थः। बहूनामपीति। अन्यथा 'सुप्सुपे'ति गुणे सङ्ख्याया विवक्षि… त्वाद्द्वयोरेव स्यात्। उत्तरपद इति। द्विगुग्रहणं 'तद्धितार्थे'त्यनेन विहितस्य स… सस्योपलक्षणम्। तेन दिशः समानाधिकरणेनोत्तरपदे समासावयवविशेषे पर… समासविधानं बहूनां समासस्य ज्ञापकमित्यर्थः। द्विगुस्तु ब्रह्मजातादौ सावका…

उ.]बहुपदके बहुव्रीहिविधानं सावकाशमिति वक्तुं युक्तम्।ततश्चेति।नचैकसंज्ञाऽधि… काराद्बहुव्रीहिसंज्ञया कर्मप्रवचनीयत्वबाधे षत्वं स्यात्।किं च कर्मप्रवचनीयसंज्ञा… निरवकाशत्वेन तया बाधाद्बहुव्रीहिसंज्ञैव न भविष्यतीति वाच्यम्,उपसर्गसंज्ञा… अपि तद्रीत्या बाधात्। परंकार्यत्वपक्षे समावेशसंभवाच्चेत्यभिमानः। केचिदिति… अत्राऽरुचिस्तु 'स्या'दित्यनेन व्यपेक्षासत्त्वेप्येकार्थीभावाऽभावः। स्यादिति प… मिति। प्रकृतिप्रत्ययार्थयोरत्रैकार्थीभावः स्यादित्यभिमानः।अत्र व्याख्यानेऽपि ए… संज्ञाधिकारेऽप्युक्तदोषो न,संज्ञयोर्भिन्नाश्रयत्वात्। विच्छिन्नत्वादिति। अतिङ्ग्र… तु नानुवर्तते, व्याख्यानादिति भावः। योगद्वये एवेति। तत्रैवाऽतिङ्पदसंबन्धा… दिति भावः। गुणे सङ्ख्याया इति। 'सुबन्तत्वस्य प्रत्येकसमाप्तत्वा'दिति तु … युक्तम्। 'समासविधानं चे'ति पाठे चस्त्वर्थे। ब्रह्मजातादाविति। 'क… परिमाणिने'ति सूत्रस्थेनोत्तरपदेन परिमाणिना द्विगोः सिद्धय इति वार्तिके… सिद्धे बहूनां तत्पुरुषे इत्यर्थः। तदपि वचनमेतज्ज्ञापकसिद्धमेव नाऽपूर्वमिति…

१ क्वचिन्न।२ 'चानेकग्रहणम्'। इति केचित्पठन्ति। ३ धवेति क्वचिन्न। ४ 'नीयत्वं…

शास्ति॥तत्पुरुषोपि तर्हि बहूनां प्राप्नोति॥नैष दोषः।ग्रहणेन तत्पुरुष उच्यते तेन बहूनां न भविष्यति॥अत उत्तरं पठति—॥*॥अनेकवचनमुपसर्जनार्थम्॥* अनेकग्रहणं क्रियते॥ [ किं प्रयोजनम् ? ]॥ उपसर्जनार्थम्'। 'प्रथमानिर्दिष्टं समास उपसर्जन'[2]मित्यनेकस्य सुप उपसर्जनसंज्ञा यथा स्यात्—चित्रगुः शबलगुरिति॥*॥न वैकविभक्तित्वात्॥*॥न वैतद[3]पि प्रयोजनमस्ति॥किं कारणम्?॥ 'एकविभक्तित्वात्'।'एकविभक्ति चापूर्वनिपाते' इत्युपसर्जनसंज्ञा भविष्यति,—चित्रगुः शबलगुरिति । चित्रा अस्य गावश्चित्रगुस्तिष्ठति । चित्रा यस्य गावश्चित्रगुं पश्येति[5] । चित्रा यस्य[6] गावश्चित्रगुणा कृतम् । चित्रा यस्य[6] गावश्चित्र-

---

प्र.]त्वान्न ज्ञापकः।तत्पुरुषोऽपीति। ज्ञापकफलस्य विषयविभागाऽभावादनिष्टप्रसङ्गो महत्कष्टं श्रित इत्यत्रापि तत्पुरुषप्रसङ्गात्। ग्रहणेनेति। विशिष्टपूर्वोत्तरपदनिर्देशेनेत्यर्थः।तत्र द्वितीयान्तस्य श्रितादिभिः समासविधानात्प्रत्ययग्रहणपरिभाषोपस्थानात्समुदायस्याऽद्वितीयान्तत्वादत्र तत्पुरुषाऽभावः । यद्येवमिहापि सुप्सुपेत्यनुवर्तनात्कथं बहूनां बहुव्रीहिः । अथ ज्ञापकेन सङ्ख्याविवक्षा बाध्यते तदा द्वितीयादिष्वपि सङ्ख्याया अविवक्षा स्यात् । नैष दोषः, तत्पुरुषविधौ सुप्सुपेति सङ्ख्या प्रतीयते, द्वितीयेत्यपि । द्वन्द्वबहुव्रीह्योस्तु सुप्सुपेत्यत्रैव सङ्ख्याप्रतीतिः । तत्र ज्ञापकेनैकैव सङ्ख्याप्रतीतिर्बाध्यते । तावता चरितार्थत्वाद्द्वितीयादिषु सङ्ख्याया अबाधः। चित्रगुरिति । सत्यनेकग्रहणे सुबित्येवाऽनुवर्तते न तु सुपेति । तन्निवृत्त्यर्थत्वात्तस्य । ततश्चोत्तरपदमपि तेन प्रत्याय्यत इति समासशास्त्रे गोशब्दस्य प्रथमानिर्दिष्टत्वादुपसर्जनत्वाद्ध्रस्वसिद्धिः। न वेति । अन्यपदार्थस्य प्राधान्याद्दर्शनाद्यनेकक्रियायोगा-

---

उ.]शयेन भाष्ये द्विगुग्रहणम्।'तत्पुरुषोऽपी'त्यस्य 'कालाः परिमाणिने'त्येतद्भिन्नोपि तत्पुरुष इत्यर्थ इत्यन्ये । ज्ञापकफलस्येति । सङ्ख्याऽविवक्षारूपस्येत्यर्थः । यद्वा यथाकथंचित्सुबन्तत्वादिग्रहणरूपस्येत्यर्थः। सर्वस्याऽपि समासस्य ग्रहणेन विधानादाह—विशिष्टेति । सङ्ख्याविवक्षेति । मुख्यसुबन्तत्वपर्याप्त्यधिकरणग्रहणविवक्षेत्यपि बोध्यम्। संख्याया अविवक्षेति । यथा कथंचिद्द्वितीयान्तग्रहणविवक्षेत्यपि बोध्यम् । अबाध इति । अन्यत्र मुख्यद्वितीयाद्यन्तग्रहणम्, सुप्सुपेत्यत्र तु ज्ञापकेन यथाकथंचित्सुबन्तग्रहणमिति तत्त्वम् । अत्र तदपि द्वन्द्वबहुव्रीहिविधायके एवेष्टानुरोधात् ,परिमाण्युत्तरपदकसमासविधौ चेति बोध्यम्। 'ग्रहणेन तत्पुरुष' 'इत्यत्र तत्पुरुषपदमव्ययीभावस्याप्युपलक्षणम् । तन्निवृत्त्यर्थत्वादिति । इदं चिन्त्यं, तदनुवृत्तावपि द्वयोः समासाऽभावार्थं तदित्यस्याऽपि वक्तुं शक्यत्वात्तन्निवृत्तिं विना सर्वेषामुपसर्जनत्वाऽसंभवो द्वयोः समासाऽलाभश्चेति

---

१ छुसं स्यात् । २ 'मित्युपसर्जन'। ३ 'नवैतत्प्रयो'। ४क्वचिन्न । ५ 'पश्यति'। ६ 'अस्य'।

गवे देहि । चित्रा अस्य गावश्चित्रगोरानय । चित्रा यस्य गावश्चित्रगोः स्व
चित्रा यस्य गावश्चित्रगौ निधेहि। चित्रा यस्य गावो हे[1] चित्रगो इति॥ य
तर्हि यतः कुतश्चिदेव किंचित्पदमध्याहृत्य एकविभक्तियोगः क्रियते, एतद
कविभक्तियुक्तं भवतीहापि प्राप्नोति—राजकुमारी तक्षकुमारी।राज्ञो या कु
राजकुमारी तिष्ठति । राज्ञो या कुमारी राजकुमारीं पश्य । राज्ञो या कु
राजकुमार्या कृतम् । राज्ञो या कुमारी राजकुमार्यै देहि । राज्ञो या कु
राजकुमार्या आनय । राज्ञो या कुमारी राजकुमार्याः स्वम् । राज्ञो
कुमारी राजकुमार्यां निधेहि । राज्ञो या कुमारी हे राजकुमारि-इति
एकविभक्तियुक्तमेव यन्नित्यम् । न चैतन्नित्यमेकविभक्तियुक्तमेव राज्ञः कुमा
पश्य राजकुमारीं पश्येत्यपि भवति ॥ किं वक्तव्यमेतत् ? ॥ नहि ॥ कथम
नुच्यमानं गंस्यते ?॥ एकग्रहणसामर्थ्यात् । यदि हि यदेकविभक्तियुक्तं त

प्र.] दनेकविभक्तित्वेऽपि वर्तिपदानामेकविभक्तित्वादित्यर्थः । यदि तर्हीति । अ
भावः—चित्रा गावोऽस्येत्यस्मिन्विग्रहवाक्ये न कस्यचिदनेकविभक्तित्वं यदपेक्ष
वर्तिपदानामेकविभक्तित्वं स्यात् । अथ यथाकथंचिदन्यस्याऽनेकविभक्तित्वमाश्रि
वर्तिपदस्यैकविभक्तित्वं व्यवस्थाप्यते तदाऽतिप्रसङ्गः राज्ञो या कुमारी तां पश्य, त
कृतं, तस्यै देहीत्याश्रयेण कुमारीशब्दस्यैकविभक्तित्वादुपसर्जनह्रस्वत्वं स्यात्
एकविभक्तियुक्तमेवेति । अयं भावः—नायं नियमः, 'प्रथमान्तस्यैव कुमा
शब्दस्य षष्ठीसमासेन भाव्यम्'। किं तर्हि ? । द्वितीयाद्यन्तस्यापि । ततश्च सम
विधीयमाने एकविभक्तित्वाऽभावात् कुमारीशब्दस्योपसर्जनह्रस्वत्वाऽभावः।एकग्र
सामर्थ्यादिति । एकैकस्मिन्प्रयोगे सर्वस्यैव एकविभक्तित्वादेकविभक्तिग्रहणं व्य

उ.] व्याख्यानात्तन्निवृत्तिरिति तत्त्वम्। वर्त्तिपदानामेकविभक्तित्वादिति। 'समासा
क्षये'ति शेषः। यदपेक्षयेति । 'विग्रहे यदेकविभक्तिक'मित्युक्तौ प्रत्यासत्त्या वि
हीयपदान्तरापेक्षया यत्तादृशमिति लभ्यते। नहि 'चित्रा गाव' इत्येतत्तथेति भा
अथेति । यथाकथंचित्–पर्यायेण, अन्यस्य–समासस्य समासपदाद्यत्किंचिदेक
भक्तिकमित्यर्थ इति भावः । भाष्ये कुतश्चिदेव–समासार्थविग्रहे इत्युक्तिरूपहे
किंचित्पदं समासरूपम्।अध्याहृत्येत्यस्य ज्ञानविषयीकृत्येत्यर्थः। 'तदपेक्ष' इति
शेषः । अनेनोक्तेऽप्यर्थे प्रत्यासत्तिमूलकत्वं दर्शितम् । अत एव 'सभार्य' इत्यत्र
वुपसर्जनत्वेन ह्रस्वसिद्धिः । अन्यथा विग्रहीयसहपदे विभक्तेरेवाऽभावेन तदपेक्ष
नियतविभक्तित्वाऽभावात्तदप्राप्तिः । मम त्वनियतविभक्तिकसमासान्तत्वं सुपप
लुका विभक्त्यनुत्पत्तेरेवाऽन्वाख्यानाच्च। राज्ञो या कुमारीति,–प्रथमान्तेनैव समा

१ क्वचिन्न । २ 'विभक्त्या योगः'। ३ 'मारीति' । ४ 'राजकुमारि'। ५ 'तस्यै दे

नेकविभक्तियुक्तं च तत्र स्यादेकग्रहणमनर्थकं स्यात्। 'विभक्तियुक्तञ्च पूर्वं निपाते' इत्येव ब्रूयात्॥

॥*॥ पदार्थाभिधानेऽनुप्रयोगानुपपत्तिरभिहितत्वात्॥*॥ पदार्थाभिधानेऽनुप्रयोगस्यानुपपत्तिः—चित्रगुर्देवदत्त इति॥ किं कारणम्?॥ 'अभिहितत्वात्'। चित्रगुशब्देनाभिहितः सोऽर्थ इति कृत्वाऽनुप्रयोगो न प्राप्नोति॥

॥*॥ न वाऽनभिहितत्वात्॥*॥न वैष दोषः॥ किं कारणम्?॥ 'अनभिहितत्वात्'। चित्रगुशब्देनाऽनभिहितः सोऽर्थ इति कृत्वाऽनुप्रयोगो भविष्यति॥ कथमनभिहितो,यदिदानीमेवोक्तं—'पदार्थाभिधानेऽनुप्रयोगानुपपत्तिरभिहितत्वा'दिति॥* सामान्याभिधाने हि विशेषानभिधानम्॥*॥ सामान्ये ह्यभिधीयमाने विशेषोऽनभिहितो भवति। तत्रावश्यं विशेषार्थिना विशेषोऽनुप्रयोक्तव्यः,—चित्रगुः को देवदत्त इति॥भवेत्सिद्धं यदा सामान्ये वृत्तिः। यदा तु खलु विशेषे वृत्तिः, तदा न सिध्यति—चित्रा गावो देवदत्तस्यँ चित्रगुर्देवदत्त इति॥ तदाऽपि सिद्धम्॥ कथम्?॥ नेदमुभयं युगपद्भवति वाक्यं च, समासश्च। यदा वाक्यं, न तदा समासः। यदा समासो, न तदा वाक्यम्। यदा समासस्तदा सामान्ये वृत्तिः। तत्राऽवश्यं विशे-

प्र]ग्रेणानेकविभक्तेर्निरासार्थमित्यर्थः।विभक्तियुक्तमिति।एतदपि किमर्थमुच्यत इति चेत्संज्ञिनिर्देशार्थम्। अन्यथा 'अपूर्वनिपात' इत्येतावदुच्यमाने संज्ञ्यनिर्दिष्टः स्यात्।

पदार्थाभिधान इति। देवदत्तपदस्य यावानर्थस्तावान् बहुव्रीहिणा वक्तव्योऽन्यपदार्थे तस्य विधानात्, ततो गतार्थत्वादनुप्रयोगो न प्राप्नोतीत्यर्थः। यथा चार्थे द्वन्द्वविधानात् द्वन्द्वे चशब्दस्य प्रयोगो न भवति एवमिहापि देवदत्तादिपदानां न स्यात्। सामान्याभिधाने हीति।चित्रगुशब्देन तद्वन्मात्रमुच्यते,न तु विशेषः। यदा सामान्य इति। चित्रा गावोऽस्येत्येवं विग्रहे कृतेऽन्यपदार्थसामान्यस्य बहुव्रीहिणाऽभिधानाद्विशेषस्याऽनुप्रयोगो भवतु यदा विशिष्टेऽन्यपदार्थे बहुव्रीहिः क्रियते तदानुप्रयोगाऽसिद्धिः। नेदमुभयमिति। लौकिके प्रयोगे वृत्तिवाक्ययोर्युगपत्प्रयोगाऽभावादेकेनैवार्थस्य प्रत्यायितत्वादितरप्रयोगाऽयोगात्। यदा समास इति। शब्दशक्तिस्वाभाव्यादन्यपदार्थसामान्यमेवाऽभिधातुं समर्थः समासो न

उ.]इति दूषणम्। किं तर्हीति।वाक्यसंस्कारे परिनिष्ठितविभक्त्याऽपि समास इति समाधानम्। ततश्चेति। तस्य चेत्यर्थः। पर्यायेणेति। प्रयोगभेदेनाऽपि यत्रैकविभक्तित्वमेव तत्र यथा स्यादित्यर्थमिति भावः। तदेवं प्रत्यासत्त्यनाश्रयणेन 'समासापेक्षया विग्रहे यन्नियतविभक्तिक'मित्यर्थमाश्रित्याऽनेकग्रहणं भगवता प्रत्याख्यातम्। ज्ञापकक्लेशं परिहर्तुमनेकग्रहणं सूत्रकृता कृतमिति दिक्। वाक्यमुपमृद्य

१ कश्चिन्न। २ 'पदार्थस्य'। ३ 'चित्रगुणाऽभिहितः'। ४ 'यावतेदानीं'। ५ 'सामान्याभिधाने विशे'। ६ 'विशेषवृत्तिस्तदा'। ७ 'स्येति'। ८ 'तथापि'। ९ 'संभव'। १० 'तदा न'। ११ 'सामान्येन तदा वृत्तिः'।

पार्थिना विशेषोऽनुप्रयोक्तव्यः—चित्रगुः॥कः? ॥ देवदत्त इति ॥ साया-
स्यैव तर्ह्यनुप्रयोगो न प्राप्नोति–[चित्रगुः।कः?]। चित्रगु तत्,चित्रगु किञ्चि
चित्रगु सर्वमिति॥सामान्यमपि यथा विशेषस्तद्वत्।तत्र चित्रग्वित्युक्ते सन्दे
स्यात्–सर्वं वाऽविश्वं वेति । तत्रावश्यं सन्देहनिवृत्त्यर्थं विशेषार्थिना वि
ऽनुप्रयोक्तव्यः–'चित्रगु त'दिति।अथवा विभक्त्यर्थोऽभिधीयते ।एतच्चात्र
यद्विभक्त्यर्थोऽभिधीयते, तत्र हि सर्वंपश्चात्पदं वर्त्ततेऽस्येति ॥*॥विभक्त्य
भिधानेऽद्रव्यस्य लिङ्गसङ्ख्योपचारानुपपत्तिः ॥*॥ विभक्त्यर्थाभिधानेऽद्रव्य

प्र.]विशेषमिति प्रक्रियायामपि सामान्येन विग्रहः कार्य इत्यर्थः । सामान्य
तर्हीति । सामान्यस्य समासेनैवाऽभिधानात् । सामान्यमपीति । यथा वि
विशेषाऽन्तरस्य निवर्तकस्तद्वत्सामान्यमपि विशेषाणां निवर्तकं सद्विशेष
त्यर्थः । चित्रग्विति । लिङ्गसर्वनाम्ना नपुंसकेन निर्देशः सामान्यवृत्ति
प्रकाशयितुं कृतः।'सर्वं वाऽविश्वंवे' त्यत्राऽकारप्रश्लेषः कृतः। अन्यथा पर्याय
स्यात् । तत्रावश्यमिति । 'चित्रगु सर्व'मित्युक्ते न त्वेकमेवेति विशेषावग
वतीत्यर्थः। अथ वेति। कृत्स्नपदार्थाभिधानेऽनुप्रयोगाऽसिद्धिश्चोदिता परिहृता
यदा तु विभक्त्यर्थः सवन्धादिरभिधीयते समासेन तदा तद्वाचिनी विभक्ति
योजि, द्रव्यं त्वनभिहितमिति तद्वाची शब्दोऽवश्यानुप्रयोक्तव्यः । कथं पुन
पदार्थ इत्युच्यमाने विभक्त्यर्थ एव गृह्यत इत्याह—तत्र हीति । पदेन प्रकृत्य
पसर्जनः प्रत्ययार्थोऽभिधीयत इति विभक्त्यर्थस्यैव प्राधान्यादन्यपदार्थ
ग्रहणमित्यर्थः। सर्वंपश्चादिति—भाष्यकारवचनप्रामाण्यादव्ययेनाऽपि षष्ठीसम
अद्रव्यस्येति । असत्त्वभूतस्य विभक्त्यर्थस्य लिङ्गसंख्याभ्यां व्यवहारो नोपप

उ.]समासप्रवृत्तेस्तस्यापि बुद्ध्यारूढत्वमस्तीत्यत आह–लौकिके प्रयोगे इति।
सर्वेषां चित्रगुपदशक्यत्वेन तस्य सामान्यशब्दत्वमिति सामान्येनैव विग्रहः
इति विशेषवाक्यं न बुद्धिस्थमिति 'यदा समासः, सामान्येन तदा वृत्ति
भाष्यार्थ इति भावः । सद्विशेष एवेति । इतरभेदकत्वमेव विशेषत्वमिति भा
अविश्वमित्यस्य असर्वमित्यर्थः । चित्रा गावो देवदत्तस्येति विग्रहेपि न देव
समासशक्यः किं तर्हि, विभक्त्यर्थ एवेति भाष्ये पक्षान्तरमाह–अथवा विभ
इति । तद्व्याचष्टे–कृत्स्नेति । गृह्यत इति : स्वतन्त्रः सन् समासशक्य इ
प्रकृत्यर्थोपसर्जनः प्रत्ययार्थ इति । स च संबन्धरूपः । सांसर्गिकविषय
रूपिता च तत्सत्त्वे प्रकारतेति भावः । अव्ययेनापीति । अन्यथा 'पूरणगुण
निषेधः स्यादित्यर्थः । 'अव्यय'शब्देन कृदव्ययमेव गृह्यत इति युक्त्यन्तर
तत्रैव मयेति दिक् । लिङ्गसङ्ख्याभ्यामिति । इदमुपलक्षणं चित्रगुर्देवदत्त

१ क्वचिन्न । २ 'सर्वं पश्चा'। ३ 'ग्रस्ये'। 'वर्त्तते विभक्त्यर्थे इति'। ४ 'न ह्यं

लिङ्गसङ्ख्याभ्यामुपचारोऽनुपपन्नः । बहुयवम् । बहुयवा । बहुयवः बहुयवौ बहुयवा इति ॥ अपर आह[3]–॥*॥ विभक्त्यर्थाभिधाने द्रव्यस्य लिङ्गसङ्ख्योपचारानुपपत्तिः॥*॥ विभक्त्यर्थाभिधाने द्रव्यस्य ये लिङ्गसङ्ख्ये ताभ्यां विभक्त्यर्थस्योपचारोऽनुपपन्नः। बहुयवं । बहुयवा । बहुयवः बहुयवौ बहुयवा इति ॥ कथं ह्यन्यस्य[3] लिङ्गसङ्ख्याभ्यामन्यस्योपचारः स्यात् ? ॥ सिद्धं तु यथा गुणवचनेषु ॥*॥ सिद्धमेतत्॥कथम्?॥'यथा गुणवचनेषु'॥कथं[4] गुणवचनेषु?॥गुणवचनेषूक्तम्॥किमुक्तम्[4]?॥'गुणवचनानां हि[5] शब्दानामाश्रयतो लिङ्गवचनानि भवन्ती'ति । तद्यथा–शुक्लं वस्त्रं, शुक्ला शाटी, शुक्लः कम्बलः शुक्लौ कम्बलौ शुक्लाः कम्बला इति । यदसौ द्रव्यं श्रितो भवति गुणस्तस्य यल्लिङ्गं वचनं च तद्गुणस्यापि भवति । एवमिहापि यदसौ द्रव्यं श्रितो भवति विभक्त्यर्थः तस्य यल्लिङ्गं वचनं च[6] तत्समासस्यापि भविष्यति॥ यदि तर्हि विभक्त्यर्थोऽ-

प्र.]इत्यर्थः। अपर इति । अकारप्रश्लेषोऽत्र व्याख्याने नास्ति । आश्रयत इति । यदा पदावधिकमन्वाख्यानं तदा शुक्लो गुणोऽस्येति मतुब्लुक्का सामान्यमात्रे पदं संस्क्रियत इत्येकत्वनपुंसकत्वाश्रयेण पदप्रयोगे प्राप्ते 'विशेषणानां चाऽजाते'रिति सूत्रेण गुणवचनानामाश्रयतो लिङ्गवचनानि प्रतिपादितानि । वाक्यसंस्कारे तु न्यायसिद्धानि, आश्रयविशेषाश्रयेणैव पदसंस्कारात्।तत्र यद्यपि चित्रगुशब्देन संवन्धोऽभिधीयते तथाप्यभेदोपचारात्संवन्ध्यभिधीयते।तत्र द्विष्ठत्वेपि संवन्धस्य प्रधानत्वात्स्वामिन एवाश्रयत्वं व्यवस्थाप्यत इति तद्गते लिङ्गसङ्ख्ये भवतो न तु गवाश्रये। यदि तर्हीति । यथा शुक्लशब्देन कदाचिद्गुण उच्यते कदाचिद्गुणी, तथा चित्रगुशब्देन केवलस्यापि संवन्धस्याभिधानं प्राप्नोति, संबन्धिन एव तु सर्वदेष्यते तत्र

उ.]सामानाधिकरण्येन व्यवहारो न स्यादित्यपि बोध्यम्। न्यायसिद्धानीति। अत्र चेदमेव भाष्यं मानम् । अन्यथा गुणवचनेष्वस्य वाचनिकतया समासस्याकडारसूत्रोक्तरीत्या गुणवचनत्वाऽभावेन वचनाऽप्रवृत्तावसङ्गतिः । गुणवचनत्वे तु यथातथाशब्दासङ्गतिः स्पष्टैव । अभेदोपचारादिति । आश्रयाभेदमापन्नविभक्त्यर्थ एव चित्रग्वादिपदैरुच्यत इति भावः । संबन्ध्यभिधीयत इति । विशेष्यतया आश्रीयते चित्रगुर्देवदत्त इत्यादावित्यर्थः । ननु गवामपि संबन्धित्वात्तद्गतलिङ्गसङ्ख्ये किं न स्यातां, तत्राह–तत्र द्विष्ठत्वेपीति । गवादिरूपस्वनिरूपितसंबन्धस्यैव बोधनेन स्वामिन एवाश्रयत्वात्तद्गतलिङ्गसङ्ख्ये एव भवत इत्यर्थः। एवं च बहुव्रीहेः सामान्यशब्दत्वमेवेति विशेषज्ञानायाऽनुप्रयोग आवश्यक इति भावः । ननु बहुव्रीहेः संबन्धिपरत्वस्योक्तत्वेन 'यदि तर्ही'ति भाष्यानुत्थानमाशङ्क्याह–२.थेति । एवं च

१ 'लिङ्गसङ्ख्याभ्यां विभक्त्यर्थस्याऽर्थे उपचा'। २ 'श्राह'। ३ 'कथमन्यस्य'। ४ क्वचिन्न । ५ 'भवति' । ६ 'तत्र बहु' ।

भिधीयते कृत्स्नः पदार्थः कथमभिहितो भवति सद्रव्यः सलिङ्गः ससङ्ख्यश्च' 'अर्थग्रहणसामर्थ्यात्' । इहाऽनेकमन्यपदे इतीयता सिद्धम् । कथं पुनः नाम वृत्तिः स्यात् । [पदं नाम शब्दः] शब्दो ह्येष, शब्दे ह्यसंभवा कार्यं विज्ञास्यते । सोऽयमेवं सिद्धे सति यदर्थग्रहणं करोति तस्यैतत्प्रयोजनं 'कृत्स्नः पदार्थो यथाऽभिधीयते सद्रव्यः सलिङ्गः ससङ्ख्यश्चे'ति ॥ यदि त कृत्स्नः पदार्थोऽभिधीयते—लैङ्गाः साङ्ख्याश्च विधयो न सिध्यन्ति ॥*॥ उक्तं वा ॥*॥ [ उक्तं वा ] ॥ किमुक्तम् ? ॥ लैङ्गेषु तावदुक्तं 'सि तु स्त्रियाः प्रातिपदिकविशेषणात्स्वार्थे टाबादय' इति ॥ साङ्ख्येष्वप्युक्तम् किमुक्तम् ? ॥ 'कर्मादीनामनुक्ता एकत्वादय' इति कृत्वा साङ्ख्या भवि ष्यन्ति'—इति ॥ प्रथमा तर्हि न प्राप्नोति ? ॥ समयाद्भविष्यति।

प्र.]सिध्यतीत्यर्थः।'कृत्स्न' इत्युक्तं तदेव कात्स्न्यं प्रतिपाद्यते—सद्रव्य इति। द्र शब्देन सत्त्वरूपोऽर्थ उच्यते । अर्थग्रहणसामर्थ्यादिति । यदि विभक्त्यर्थस्य प्रधानस्य ग्रहणमभिमतं स्यात्तदाऽर्थग्रहणं न कुर्यात् , अन्तरेणाप्यर्थग्रहणमर्थस्य लाभादित्यर्थः । यदि तर्हीति । यथा बहुव्रीहिणा विभक्त्यर्थस्याऽभिधानात्प्रत्ययाः न भवन्ति, एवं लिङ्गसङ्ख्ययोरप्यभिधानात्तयोर्वाचकाः प्रत्यया न प्राप्नुवन्ति सिद्धं त्विति । स्त्रियां यत्प्रातिपदिकं वर्तते तस्माट्टाबादयो भवन्तीत्यर्थः । तत समासेनाऽभिहितेपि स्त्रीत्वे द्योतकाष्टाबादयो भवन्तीति दोषाऽभावः । कर्मादी मिति । चित्रगुरिति समासेन प्रातिपदिकार्थमात्रस्य कर्मादिशक्तिरहितस्यैकत्वा उक्तास्ततः कर्मादिगतैकत्वप्रतिपादनाय वचनानि भवन्ति—'चित्रगुं पश्य' 'चित्र गुणा कृत'मिति । प्रथमेति । समासेन संख्याया अभिधानात् । समयादिति परश्चेति नियमार्थमारब्धं—'न केवला प्रकृतिः प्रयोक्तव्या, न च केवलः प्रत्य

उ.] कथमभिहित' इति भाष्यस्य 'सर्वदे'त्यादिर्बोधः । द्रव्यशब्देनेति । त दर्शितं भाष्ये 'सलिङ्ग' इत्यादिना । अर्थस्यैव लाभादिति । स चाऽर्थः प्राधान्य द्विभक्त्यर्थ एव ग्रहीष्यत इति भावः । अर्थग्रहणसामर्थ्याच्च संबन्धादिवि क्त्यर्थ आश्रयाऽभिन्न एव बुध्यत इति तत्त्वम्। एवं च पद्मादिशब्दवन्नियमेन गुणि पर एवाऽयं न कदाचिदपि गुणपर इति भावः। 'यदि तर्हीं'त्यादि भाष्यमेकदेशि घटादिशब्देष्विव तदुपपत्तेः पञ्चकस्य सर्वत्र प्रातिपदिकार्थत्वात् । न प्राप्नुव न्तीति । उक्तार्थानामप्रयोगादिति भावः। कर्मादिगतैकत्वेति। साद्ब्यादिनिरूपि कर्मादिशक्तिविशिष्टप्रातिपदिकार्थगतैकत्व इत्यर्थः । समासेनेति । प्रथ हि प्रातिपदिकार्थगतसङ्ख्यामात्राऽभिधायिनीति तत्सूत्राऽनुवृत्तेमनभिहित तस्या एव विशेषणमिति भावः । नियोगत इत्यस्याऽर्थो—विश नेति । नियमाऽभावमुपपादयति—प्रतिनियतैवेति । समयो हि सामान्य

१ इदं वार्तिकं स्यात् । २ क्वचिन्न । ३ 'मेव' । ४ लुप्तं स्यात् । ५ 'कत्वावि

सामयिकी न नियोगतः, अन्याः कस्मान्न भवन्ति ? ॥ कर्मादीनामभावात् ॥ षष्ठी तर्हि प्राप्नोति ? ॥ शेषलक्षणा षष्ठी, अशेषत्वान्न भविष्यति ॥ एवमपि व्यतिकरः प्राप्नोति—एकस्मिन्नपि द्विवचनबहुवचने प्राप्नुतः, द्वयोरप्येकवचनबहुवचने, बहुष्वप्येकवचनद्विवचने ॥ अर्थतो व्यवस्था भविष्यति ॥ अथ वा सङ्ख्या नामेयं परप्रधाना । सङ्ख्येयमनया विशेष्यम् । यदि चात्र प्रथमा न स्यात्, सङ्ख्येयमविशेषितं स्यात्॥अथ वा वक्ष्यत्येतत्तत्र वचनग्रहणस्य प्रयोजनम्—'उक्तेष्वप्येकत्वादिषु प्रथमा यथा स्यात्' [इति]॥

प्र.]इति । न नियोगत इति । नियमेन । प्रतिनियतैव यदि न भवति विभक्तिः ततः समयपरिपालनाय द्वितीयादयोऽपि प्राप्नुवन्ति, नियमकारणाऽभावादित्यर्थः । कर्मादीनामभावादिति । 'कर्मण्येव द्वितीये'त्येवं कर्मादिषु द्वितीयादीनां नियतत्वात्तदभावे तासामभावः । षष्ठी तर्हीति । कर्मादीनामभावः शेषः, स चाऽत्राऽस्तीति भावः । अशेषत्वादिति । प्रातिपदिकार्थमात्रस्य प्रथमाविधावुपयोगान्नास्ति शेषत्वमित्यर्थः । एवमपीति । समयात् प्रथमायामिष्यमाणायां वचनस्य व्यतिकरप्रसङ्गः । अर्थत इति । यथाऽन्यत्रैकत्वादिष्वेकवचनादीनि दृष्टानि तथैवात्रापि भवन्ति । एवं हि समयश्च परिपालितो भवत्यर्थश्चाऽनुसृतः । अथवेति । असङ्करं प्रथमाविधानं च प्रकारान्तरेण प्रतिपादयति । यदा चित्रगुरित्येकत्वविशिष्टः प्रातिपदिकार्थः प्रतिपिपादयिषितस्तदा विभक्त्या विनाऽसौ न शक्यते प्रत्याययितुमिति प्रथमैकवचनं विधेयम् । एवं द्वित्वबहुत्वयोर्द्विवचनबहुवचनविधिः । परप्रधानेति ।

उ.]विभक्तिं बोधयति न प्रतिनियतां कांचिदिति भावः । यदीति । यत इत्यर्थः । यतः प्रतिनियतैव समयान्न भवति तद्घटितसमयाऽभावादित्यर्थः । द्वितीयादयोपीति । अर्थाऽभावेपि नियमपरिपालनाय, 'विभक्तिश्चेत्प्रथमैवे'ति नियमाऽभावादिति भावः । प्रातिपदिकेति । कर्मादिप्रातिपदिकार्थव्यतिरिक्तो हि शेष इत्यर्थः । व्यतिकरो—व्यत्यासः। अर्थाऽभावेपि समयाद्भविष्यतीत्युक्त्वाऽर्थतो व्यवस्थेत्युक्तिरसङ्गतेत्यत आह—यथान्यत्रेति । विरुद्धविभक्त्यपेक्षयाऽनुवादकविभक्तेर्न्याय्यत्वमिति भावः । भाष्ये—अथवा सङ्ख्या नामेयमिति । इयं—यद्वैशिष्ट्येन प्रातिपदिकार्थः प्रतिपिपादयिषितः सा, परप्रधाना—इतरपरिच्छेदिकैव । तदेवाह—सङ्ख्येयमनया विशेष्यमिति । संख्येयं—द्रव्यं प्रातिपदिकार्थः, अनया—सङ्ख्यया, विशेष्यं—परिच्छेद्यतया बोधनीयम् । एवं च यावत्सङ्ख्यं सङ्ख्येयं तावत्सङ्ख्याप्रतिपादिका विभक्तिरुचिता । विभक्तिमन्तरा तस्या अप्रतिपत्तेरिति भावः । यदि चात्र प्रथमा न स्यादिति । असङ्करेणेत्यर्थः । तदाह—यदा चित्रगुरिति ।

१ क्वचिन्न ।

 

एवमपि षष्ठी प्राप्नोति ॥ किं कारणम् ? ॥ व्यभिचरत्येव ह्ययं सम
लिङ्गसङ्ख्ये, षष्ठ्यर्थं पुनर्न व्यभिचरति ॥ अभिहितः सोऽर्थोऽन्तर्भूतः प्राति
दिकार्थः संपन्नः, तत्र 'प्रातिपदिकार्थे प्रथमे'ति प्रथमा भविष्यति॥ न त
दानीमिदं भवति–चित्रगोर्देवदत्तस्येति ? ॥ भवति बाह्यमर्थमपेक्ष्य षष्ठी
परिगणनं कर्त्तव्यम् ॥*॥ बहुव्रीहिः समानाधिकरणानाम् ॥*॥ समानाधिक
णानां बहुव्रीहिर्वक्तव्यः ॥ किं प्रयोजनम् ? ॥ व्यधिकरणानां मा भूदि
पञ्चभिर्भुक्तमस्येति ॥*॥ अव्ययानां च ॥*॥ अव्ययानां च बहुव्रीहि
क्तव्यः । उच्चैर्मुखमस्येति उच्चैर्मुखः नीचैर्मुखः ॥*॥ सप्तम्युपमानपूर्वपद

प्र.]सङ्ख्येयप्रधानेत्यर्थः । एवमपीति । षष्ठ्यर्थस्याऽत्र भावात् । व्यभिचरतीति
लिङ्गान्तरसङ्ख्यान्तरयोगेऽन्यलिङ्गसङ्ख्यापरित्यागात् । अभिहित इति । संबन्ध
प्रातिपदिकार्थरूपत्वात् षष्ठ्यर्थता नास्तीत्यर्थः । सर्व एवात्र संबन्धोऽन्तर्भूत
प्रातिपदिकार्थतां गत इति मत्वा पृच्छति–न तर्हीति । भवति बाह्यमिति
गोभिरन्यपदार्थस्य यः संबन्धः स एव समासेऽन्तर्भूतो न तु सर्वः । बहुव्रीहि
रिति । भाष्यकारेण त्रिकतः शेषो गृह्यत इत्ययमर्थः साधितः, वार्तिककारे
वचनेन प्रतिपाद्यते । उच्चैर्मुख इति । उच्चैःशब्दस्याधिकरणप्रधानत्वाद्वैय

उ.]द्वावित्यादौ यथाऽनुवादकं वचनं नियमेन तथाऽत्रापीति भावः। भाष्ये–अ
वक्ष्यतीति । एवं चोक्तेषु तेष्वसङ्करेणैव सेति भावः । षष्ठ्यर्थस्येति । अयं भा
प्रथमाया समभिव्याहृतप्रातिपदिकस्य चित्रगोरूपस्य प्रवृत्तिनिमित्ततदाश्रयरूप
बोधनसामर्थ्येऽप्यतथाभूतसंबन्धबोधे सामर्थ्यं नेति तद्बोधाय सम्बन्धस्यो
ऽप्यनुवादिका षष्ठ्येव स्यान्न प्रथमा, प्रातिपदिकार्थमात्राऽभावादिति। लिङ्गान्त
एवं च षष्ठ्यर्थस्य चित्रगुरित्येवंरूपे बहुव्रीहावव्यभिचरितत्वेन नियमेन
प्राप्नोतीत्यर्थ इति भावः। प्रातिपदिकार्थरूपत्वादिति । तत्र चाऽभिहितत्वं
एवं च प्रातिपदिकार्थत्वात्तद्बोधिका प्रथमेति भावः । एतद्ध्वनयितुमेवाऽर्थ
सोऽर्थं इत्युक्तम् । तेन च षष्ठ्यप्राप्तिबीजमप्युक्तम्, अनभिहिते शेष एव षष्ठी
नात् । अत एव घटशब्दान्न षष्ठी, अन्यथा घटत्वसम्बन्धस्य वि
भानात् षष्ठी स्यात् । 'अन्तर्भूत' इत्यस्य प्रवृत्तिनिमित्तत्वं तदा
वा प्रतिपन्न इत्यर्थः । ननु षष्ठ्या एवापत्तिः कथं, 'प्राप्तोदक' इ
द्वितीयादीनामप्यापत्तेरिति चेन्न । तेषु प्राप्तोदककर्तृत्येव बोधस्तत्र विशेष्ये
रूपकत्वबाधेन विशेषणमादाय पर्यवसानमिति द्वितीयादिप्रयोजककर्मत्वादे
तदप्राप्तेः । षष्ठ्यर्थस्य तु षष्ठीप्रयोजकरूपेणैव भानमित्याशयात् । वचनेन

१ 'षष्ठ्यर्थः पुन'। २ संपन्न इति तत्रापि प्रतिपदि'। ३ कचित्र। ४ 'पूर्वपदे

त्तरपदलोपश्च॥*॥ सप्तमीपूर्वपदस्योपमानपूर्वस्य च बहुव्रीहिर्वक्तव्यः, उत्तरपदस्य च लोपो वक्तव्यः ॥ कण्ठेस्थः कालोऽस्य कण्ठेकालः । उष्ट्रमुखमिव मुखमस्य उष्ट्रमुखः । खरमुखः ॥

॥*॥समुदायविकारषष्ठ्याश्च॥*॥समुदायविकारषष्ठ्याश्च बहुव्रीहिर्वक्तव्यः। उत्तरपदस्य च लोपो वक्तव्यः। केशानां समाहारश्चूडा अस्य केशचूडः।सुवर्ण[स्य]विकारोऽलङ्कारो यस्य सुवर्णालङ्कारः॥*॥प्रादिभ्यो धातुजस्यवा॥*॥प्रादिभ्यो धातुजस्य बहुव्रीहिर्वक्तव्यः।उत्तरपदस्य च वा लोपो वक्तव्यः । प्रपतितपर्णः प्रपर्णः । प्रपतितपलाशः प्रपलाशः ॥*॥ नञोऽस्त्यर्थानां च ॥*॥ नञोऽस्त्यर्थानां बहुव्रीहिर्वक्तव्यः । उत्तरपदस्य च वा लोपो वक्तव्यः । [अविद्यमानः पुत्रोऽस्य] अविद्यमानपुत्रः अपुत्रः।अविद्यमानभार्यः अभार्यः॥ तत्तर्हीदं बहु वक्तव्यम् ? ॥*॥ न वाऽनभिधानादसमानाधिकरणेषु समाससंज्ञाऽभावः ॥*॥ नवा वक्तव्यम् ॥ असमानाधिकरणानां बहुव्रीहिः कस्मान्न भवति—पञ्चभिर्भुक्तमस्येति ? ॥ 'अनभिधानात्' । तच्चाऽवश्यमनभिधानमाश्रयितव्यम्। क्रियमाणेपि वै परिगणने यत्राभिधानं नास्ति न भवति तत्र

---

प्र.]रण्यमिति वचनम् । कण्ठेस्थ इति । 'सुपि स्थ'इति कः।'अमूर्द्धमस्तका'दित्यलुक् । समासेऽत्र सिद्धे वचनमुत्तरपदलोपार्थम् । उष्ट्रमुखमिवेति । अवयवधर्मेण समुदायस्य व्यपदेशादुष्ट्रस्योपमानतेति उपमानपूर्वं उष्ट्रमुखशब्द उपमानोपमेयवृत्तित्वात् पदयोर्वैयधिकरण्यमत्रेति वचनमुत्तरपदलोपार्थं च।समुदायविकारषष्ठ्या इति । समुदायावयवसंबन्धे,प्रकृतिविकारसंबन्धे च या षष्ठी तदन्तायत्परं

---

उ.]'समानाधिकरणानाम्' 'अप्रथमार्थे'इति वचनाभ्यां त्रिकतः शेषपक्षीयोऽर्थः प्रतिपाद्यत इत्यर्थः । शेषग्रहणं तु पदतोऽर्थतो वा शेषबोधकं स्यात्, तत्र फलाऽभावो दोषश्चेति वार्त्तिकतात्पर्यम् । अमूर्धेति । 'स्थे च भाषाया'मिति तु अनन्तरस्येति न्यायेन 'तत्पुरुषे कृती'त्यस्यैव बाधकमिति भावः । उत्तरपदलोपार्थमिति । कण्ठेस्थकालनिवृत्त्यर्थमित्यर्थः । मुखस्यैवोपमानत्वेनोष्ट्रमुखशब्दस्योपमानपूर्वत्वं कथमत आह—अवयवधर्मेणेति । मुखगतोपमानत्वेनोष्ट्रस्यापि व्यवहारादिति भावः। वैयधिकरण्यमिति । वाक्ये समासे च सादृश्यसंबन्धेनाऽन्वयः । इवशब्दस्तथासंबन्धेनान्वयस्यैव द्योतक इत्यभिमानः । 'उपमानानी'ति सूत्रभाष्योक्तरीत्या सामानाधिकरण्यस्त्येवेत्यत आह—उत्तरपदेति ।

समुदायविकारवचकपदस्य षष्ठ्यन्तस्योत्तरपदेन' समास इत्यर्थभ्रमं वारयति—समुदायावयवसंबन्ध इति । भाष्ये—यथा पञ्चभुक्तवन्तोऽस्येति । अनेन

---

१ कचिन्न । २ 'कालोऽस्येति'। 'कण्ठेस्थाः काला अस्य'।३ 'मस्येति'।४'विकारस्य षष्ठ्या'। ५ 'केशसमा'।६ 'लोपो वा व' । ७ 'धिकरणेषु बहु' । ८ 'श्रयणीय' ।

बहुव्रीहिः।तद्यथा पञ्च भुक्तवन्तोऽस्येति॥ अथैतस्मिन्सत्यनभिधाने यदि वृत्ति- परिगणनं क्रियेत तर्हि वर्तिपरिगणनमपि कर्तव्यम्[2] ॥ तत्कथं कर्तव्यम् ?

॥*॥ अर्थनियमे मत्वर्थग्रहणम् ॥*॥ अर्थनियमे मत्वर्थग्रहणं कर्तव्यम् 'मत्वर्थे यः स बहुव्रीहि'रिति वक्तव्यम् । इह मा भूत्—कष्टं श्रितमनेनेति। ॥*॥ तथा चोत्तरस्य वचनार्थः ॥*॥ एवं च कृत्वोत्तरस्य योगस्य वचना उपपन्नो भवति॥ केचित्तावदाहुः—'यद्वृत्तिसूत्रे' इति । 'सङ्ख्ययाऽव्ययासन्न दूराधिकसङ्ख्याः सङ्ख्येये' इति ॥ अपर आह[3]—'यद्वार्तिके' इति ॥*॥ ॥*॥ कर्मवचनेनाऽप्रथमायाः ॥*॥ कर्मवचनेनाऽप्रथमाया बहुव्रीहिर्वक्तव्यः ऊढो रथो येनं ऊढरथोऽनड्वान् । उपहृतः पशू रुद्राय उपहृतपशू रुद्रः

प्र.]तदन्तस्य शब्दान्तरेण सह बहुव्रीहिरित्यर्थः । अथैतस्मिन्निति । अनभिधाना भ्युपगम्याऽपि यदि मन्दबुद्धिव्युत्पादनाय परिगणनं क्रियते तदाऽर्थपरिगणनं कर्तव्यम् । वर्तनं वर्त्तः—समासः, स विद्यते यस्मिन्नर्थे स वर्त्ती । मत्वर्थग्रहण मिति । षष्ठ्यर्थः सप्तम्यर्थश्च मत्वर्थः । सङ्ख्ययेति । सङ्ख्येयस्य वाऽर्थस्य चान्य पदार्थत्वात् सिद्धे समासे उत्तरसूत्रमनर्थकं स्यात् । यदा त्वनेन मत्वर्थे समास स्तदा सार्थकमित्यर्थः । व्याख्यानान्तरमाह—अपर इति । कर्मवचनेनाप्रथमा इति । प्रथमार्थं वर्जयित्वा सर्वत्राऽन्यपदार्थे कर्मवाचिना समासो भवतीत्यर्थः

उ.]'त्रिकतः शेषः' इत्यर्थेपि शेषग्रहणं प्रत्याख्यातं,तुल्यन्यायादिति बोध्यम्। इद नीमनभिधाने सत्यपि 'समानाधिकरणाना'मित्यादिवचनारम्भेऽन्यस्यापि कर्तव्य त्वमापादयति भाष्ये—अथैतस्मिन्नित्यादिना । वृत्तिपरिगणनं—वृत्त्याश्रयाणां परि गणनम् । कष्टं श्रितमनेनेति । 'गत्यर्थे'ति वा, 'आदिकर्मणी'ति वा भावे क्तः यदि कर्त्तरि कर्मणि वा क्तः स्यात्तदोत्तरवचनाभ्यामत्र समासः स्यादेव ऊढर दाविवेति बोध्यम् ।'मत्वर्थे वर्त्तमानमनेक'मित्युक्ते सामानाधिकरण्यमपि लभ्यते ति बोध्यम् । 'तथा चोत्तरस्ये'ति वाक्यं केनचित्संख्येति सूत्राभिप्रायतया व्या ख्यातं तन्निबध्नाति भाष्ये—केचिदिति । अत्र प्रथमान्तसङ्ख्यापदं'समानाधिकरणा ना'मित्युक्तावपि व्यर्थं स्यात् , द्वौ वा त्रयो वेत्यादावेकत्रैव समुदाये द्वित्वत्रित्व विकल्पप्रतीतेर्यथाकथंचित्सत्त्वात् । एवं 'द्विदशा' इत्यत्राप्यूह्यम् । अत्र पक्षे उत्त रस्य योगस्य यद्वचनं करणं तस्यार्थः फलमुपपन्नमित्यक्षरार्थः । अस्य कथन स्यार्थमावश्यकत्वमभिप्रेत्य स्वयमाह—यद्वार्तिके इति । तदेव दर्शयति—कर्मवचने नेति । कर्मवचनेनेत्यस्यायमर्थः,—प्रथमाभिन्नविभक्तेरर्थे कर्मबोधकेन शब्देन अन्य

१ 'गणनमपि क्रियते'। २ क्वचिन्न । ३ 'आहु' । ४ 'यद्वार्तिकसूत्र इति' ५ 'कर्मप्रवचनेना' । ६ 'बहुव्रीहिरिति' । ७ 'रथोऽनेन' । ८ 'तत्र'

उद्धृत ओदनः स्थाल्याः—उद्धृतौदना स्थाली॥यदि कर्मवचनेनेत्युच्यते, [अथ] कर्तृवचनेन कथम्—प्राप्तमुदकं ग्रामं प्राप्तोदको ग्रामः।आगता अतिथयो ग्राममागतातिथिर्ग्रामः ? ॥*॥ कर्तृवचनेनापि ॥*॥ कर्तृवचनेनापीति वक्तव्यम् । अप्रथमाया इति किमर्थम्[2] ? ॥ वृष्टे देवे गतः । अथ 'अप्रथमायाः' इत्युच्यमाने इह कस्मान्न भवति—वृष्टे देवे गतं पश्येति?॥ बहिरङ्गाऽत्राऽप्रथमा ॥*॥सुबधिकारेऽस्तिक्षीरादिवचनम्॥*॥ सुबधिकारेऽस्तिक्षीरादीनामुपसङ्ख्यानं कर्तव्यम् । अस्तिक्षीरा ब्राह्मणी॥ तत्तर्हि वक्तव्यम् ?॥*॥नवाऽव्ययत्वात्॥*॥ नवा कर्तव्यम् ॥ किं कारणम् ? ॥ 'अव्ययत्वात्' । अव्ययमेषोऽस्तिशब्दो, नैषोऽस्तेर्लट् ॥ कथमव्ययत्वम् ? ॥ 'उपसर्गविभक्तिस्वरप्रतिरूपकाश्च निपातसंज्ञा भवन्ती'ति निपातसंज्ञा । 'निपातोव्यय'मित्यव्ययसंज्ञा ॥

अथ किंसब्रह्मचारीति कोऽयं समासः ? ॥ बहुव्रीहिरित्याह ॥ कोऽस्य विग्रहः ? ॥ के सब्रह्मचारिणोऽस्येति ॥ यद्येवं 'कठ' इति प्रतिवचनं नोपपद्यते । न ह्यन्यत्पृष्टेनान्यदाख्येयम् ॥ एवं तर्ह्येवं विग्रहः करिष्यते—केषां सब्रह्मचारी 'किंसब्रह्मचारी'ति ॥ प्रतिवचनं चैवं नोपपद्यते, स्वरे च दोषो

प्र.]इदञ्च वार्तिकमेवमुपपद्यते यदि मत्वर्थे बहुव्रीहिर्भवति,अन्यथैतदवक्तव्यं स्यात्। आद्यमेव तु युक्तं व्याख्यानम् । नहि वार्तिककारः स्ववचनमेव ज्ञापकत्वेनोपन्यस्यति । ऊढरथ इति । रथशब्दः कर्मवचन, ऊढशब्देन सामानाधिकरण्यात् । बहिरङ्गेति । वर्तिपदार्थनिमित्ताऽन्तरङ्गा, बाह्यपदार्थापेक्षा तु बहिरङ्गेति न गृह्यते असिद्धत्वादित्यर्थः । उपसर्गविभक्तीति । स्वरादिष्वस्तिशब्दपाठमनपेक्ष्यैतदुक्तम् । प्रतिवचनमिति । वर्तिपदार्था बहुत्वसङ्ख्यायुक्ताः पृष्टास्ततश्चैकसङ्ख्यायुक्तेनाऽन्य-

उ.]सत्या कर्मवाचकस्य समास इति।तेन व्यधिकरणे न दोषः।अन्यथा—'मत्वर्थे' इत्यस्याऽभावे । अवक्तव्यमिति । सूत्रेणैव सिद्धेरिति भावः । 'आद्यमेव त्वि'त्यादि'रुपन्यस्यती'त्यन्तः कैयटग्रन्थस्तु चिन्त्यः । अस्याऽन्यवार्त्तिककारीयत्वात्, 'छुताख्यातेषु च वचनप्रामाण्या'दिति 'समर्थ'सूत्रस्थवार्त्तिकस्य 'वार्त्तिकवचनप्रामाण्या'दिति भाष्ये व्याख्यानाच्च।एवं च सर्वथा पञ्चभिर्भुक्तवन्तोऽस्येत्यत्र समासवारणायाऽनभिधानस्यावश्यकतया 'पञ्चभिर्भुक्तमस्य' 'वृष्टे देवे गतस्तत्र गतं पश्ये'त्यादावप्यनभिधानमाश्रित्य वार्त्तिकानां, शेषग्रहणस्य च प्रत्याख्यानमेव युक्तमिति भाष्याशयः। 'अव्ययानां चे'त्यपि न कार्यम् , उच्चैरादीनां वृत्तिविषये शक्तिमत्प्रधानत्वाङ्गीकारेण सूत्रेण सिद्धेः । अन्यान्यप्यनिष्टांशेऽनभिधानमाश्रित्य प्रत्या-

१'कर्मप्रवचनेने'। २ क्वचिन्न । ३ 'किम्'। ४ 'क्षीरेत्युप'। ५ 'निपाता भवन्ती'। ६'किं सब्रह्मचारीति बहुव्रीहिरग्नौ करवाणि न्यायेन'इति वार्तिकं स्यादिति गौडाः।

भवति—किंसब्रह्मचारीत्येवं स्वरः प्रसज्येत, किंसब्रह्मचारीति चेष्यते। एवं तर्ह्येवं विग्रहः करिष्यते–कः सब्रह्मचारी किंसब्रह्मचारीति ॥ भवेत्प्रति वचनमुपपन्नम्। स्वरे च दोषो भवति ॥ एवं तर्ह्येवं विग्रहः करिष्यते– कः सब्रह्मचारी तव किंसब्रह्मचारी त्वमिति ॥ अथ वा पुनरस्त्वयं विग्रहः–के सब्रह्मचारिणोऽस्येति ॥ ननु चोक्तं–'कठ इति प्रतिवचनं नोपपद्यत' इति ॥ नैष दोषः। अग्नौकरवाणिन्यायेन भविष्यति। तद्यथा–कश्चित्कंचिदाह–'अग्नौ करवाणी'ति। [ स आह ] कुर्विति[।]कर्तर्यनुज्ञाते कर्मण्यप्यनुज्ञातं भवति ॥ अपर आह–'अग्नौ करिष्य' इति। 'क्रियता'मिति कर्मण्यनुज्ञाते कर्ताऽप्यनुज्ञातो भवति। यथैव खल्वपि–के सब्रह्मचारिणोऽस्येति, 'कठाः' इत्युक्ते संबन्धादेतद्गम्यते—'नूनमयमपि कठः' इति।

प्र.]पदार्थविशेषणेन प्रतिवचनं नोपपद्यत इत्यर्थः। इष्टसमासस्थापनाय दिगन्तराणि निराकर्तुमुपन्यस्यति–एवं तर्हीति। प्रतिवचनमिति। 'कठाना'मिति प्रतिवचनेन भाव्यं, न तु 'कठ' इत्यनेनेत्यर्थः। स्वरे चेति। अन्तोदात्तः स्यादाद्युदात्तश्चेष्ट इत्यर्थः। कः सब्रह्मचारीति। सुप्सुपेति समासं मन्यते। विशेषणविशेष्यभावाऽभावात्तु विशेषणसमासो नास्ति। कः सब्रह्मचारी तवेति। एकस्मिन्पृष्टे एकवचनेन प्रतिवचनमुपपद्यते। अत्रापि पक्षे 'कठ' इति प्रतिवचनं व्यधिकरणं प्राप्नोति। 'अहं कठ' इति सामानाधिकरण्यं दृश्यत इति विशेषाऽभावं मत्वाह–अथवेति। अग्नौ करवाणिन्यायेनेति। 'अग्नौ करवाणी'ति यद्वाक्यं तदनुकरणमेतत्। कर्मा-

उ.]ख्येयानीति दिक्। 'अस्ती'ति तिङन्तमेवेति मत्वा भाष्ये–सुबधिकार इति अनपेक्ष्येति। सोऽप्रामाणिक इति तत्त्वम्। एवं च तस्याऽतिङन्तत्वात्प्रातिपदिकत्वेन सुबन्तत्वमिति सूत्रेणैव सिद्धमिति भावः। अन्यपदार्थविशेषणेनेति। अन्यपदार्थो विशेष्यते विशेषेऽवस्थाप्यतेऽनेन तादृशेन 'कठ' इति शब्देनोत्तरं नोपपद्यते इत्यर्थः। दिगन्तराणि–प्रकारान्तराणि। विशेषणविशेष्यभावाऽभावात्त्विति। परिच्छेद्यपरिच्छेदकभावो विशेष्यविशेषणभाव इत्यभिमानः। वस्तुतो विषयताविशेषत्वरूपमेव तत्र तन्निविष्टमिति तेनाऽपि समास इति चिन्त्यम्।

व्यधिकरणं प्राप्नोतीति। 'प्रश्नविषयेणे'ति शेषः।तत्र हेतुमाह–अहं कठ इति यतोऽहमित्यनेन सामानाधिकरण्यमतस्तेन व्यधिकरणमित्यर्थः। विशेषाऽभावमिति। प्रतिवचनानुपपत्तिपरिहाररूपस्य विशेषस्याऽभावमित्यर्थः। अनुकरणमिति। एवं च तद्विषयो न्याय इति मध्यमपदलोपी समासः। यत्त्वनुकरणगतित्वात्समास इति। तन्न। कृभ्वस्तियोग एव तत्प्रवृत्तेः। भाष्ये–'अग्नौ करवाणी'त्यस्याऽग्नौ हविः करवाणीत्यर्थः। कर्त्तर्यनुज्ञात इति। 'कुरु' इत्यत्र कर्त्त

१ इतिः क्वचिन्न।२ 'स्वरे तु'।३ क्वचिन्न। 'प्रत्याह'।४ 'इत्युक्तेऽपि'।५ 'नूनं सोऽपि'

एवं 'कठ' इत्युक्ते संबन्धादेतद्गन्तव्यं स्यात् 'नूनं तेऽपि कठाः' इति। न खल्वपि ते समासेन शक्याः प्रतिनिर्देष्टुम्। उपसर्जनं हि ते भवन्ति॥

अथाऽर्द्धतृतीया इति कोऽयं समासः?॥ बहुव्रीहिरित्याह॥ कोऽस्यो विग्रहः?॥ अर्द्धं तृतीयमेषामिति॥ कः समासार्थः?। समासार्थो नोपपद्यते। अन्यपदार्थो हि नाम स भवति, येषां पदानां समासस्ततोऽन्यस्य पदस्यार्थोऽन्यपदार्थः॥ एवं तर्ह्येवं विग्रहः करिष्यते-अर्द्धं तृतीयमनयोरिति॥ एवमपि कः षष्ठ्यर्थः?।षष्ठ्यर्थो नोपपद्यते। किं हि तयोरर्द्धं भवति?॥ अस्तु तर्ह्ययमेव विग्रहः—अर्द्धं तृतीयमेषामिति॥ ननु चोक्तम्—'समासार्थो

प्र.]पीति। सकर्मकत्वात्करोतिक्रियायाः। एवं कठ इति। नहि तेषां कठत्वेन विना तस्य कठत्वोपपत्तिः। तथा हि—समाने ब्रह्मणि व्रतचारी सब्रह्मचारी कथ्यते। ततश्च तस्यैकचरणाध्ययनापेक्षं सब्रह्मचारित्वम्। न खल्वपीति। वर्तिपदार्थानामुपसर्जनत्वात्तदुपलक्षितस्याऽन्यपदार्थस्य प्राधान्यात्किंसब्रह्मचारिशब्देन समासेन तेषामभिधानाऽभावात्कठा इति बहुवचनान्तं प्रतिवचनं न कदाचिद्भवतीत्यर्थः। यदा तु के सब्रह्मचारिणोऽस्येति वाक्येन प्रश्नः क्रियते न तु समासेन तदा 'कठा' इत्येव प्रतिवचनम्। समासार्थ इति। वर्तिपदार्थव्यतिरिक्तेनाऽन्यपदार्थेन भाव्यम्। इह च बहुत्वान्यथाऽनुपपत्त्या क्रियायां च वर्तिपदार्थस्याप्यन्तर्भावादन्यपदार्थो नोपपद्यते। किं हि तयोरिति। तृतीयस्य हि तदर्द्धमिति द्वाभ्यां तस्यावयवावयविभावलक्षणः संबन्धो नास्ति, स्वस्वामिसंबन्धे चात्राऽनभिधानाद्बहुव्रीहिर्न

उ.]लोट्। एवं च तात्पर्यतः प्रधानस्य कर्त्तुरेवाऽनुज्ञा भवतीति भावः। कर्मापीति। कर्म कारकमित्यर्थः। तदाह—सकर्मकत्वादिति। दृष्टान्तान्तरमप्याह भाष्ये—यथैव खल्वपीति। दार्ष्टान्तिकमाह—एवमिति। नहि तेषामिति। 'कठ' इत्यस्य कठशाखाध्येतेत्यर्थादिति भावः। चरणं—शाखा। तथा च तस्य प्रश्नस्यार्थमिदमुत्तरमिति बोध्यम्। नन्वसमासेन प्रश्न इव समासेन प्रश्नेपि बहुवचनान्तमुत्तरं कुतो नेत्यत आह भाष्ये—न खल्वपीति। सब्रह्मचारिणः समासेन प्रतिनिर्देष्टुं प्राधान्येन बोधयितुमशक्या, अतः समासेन प्रश्ने 'कठा' इत्युत्तरं नेत्यर्थः। प्रश्नवाक्ये यत्प्रधानं तद्विषयं यथाकथञ्चिज्जिज्ञासानिवर्त्तकमुत्तरमिति तात्पर्यम्। तदाह—वर्तिपदेति। 'कः समासार्थ' इति वाक्यं न कोपीत्यर्थाभिप्रायेण भगवान्विवृणोति—समासार्थो नोपपद्यत इति। वर्त्तिपदार्थस्याप्यन्तर्भावादिति। बहुत्वाऽन्यथानुपपत्त्या क्रियायां वर्तिपदार्थस्याप्यन्वयादित्यर्थः। अन्यपदार्थशब्दस्याऽन्यपदस्यैव योऽर्थो न तु स्वपदस्यापीत्यर्थ इति भावः। अत्र—

१कचित्।२'ते शक्याः समासेन'।३"अर्द्धतृतीया इति बहुव्रीहिः" इति वार्त्तिकं लुप्तम्।

नोपपद्यते' इति ॥ नैष दोषः। ॥*॥अवयवेन विग्रहः समुदायः समासार्थः॥ यद्यवयवेन विग्रहः समुदायः समासार्थः, 'असिद्वितीयोऽनुससार पाण्डवं' 'सङ्कर्षणद्वितीयस्य बलं कृष्णस्य वर्द्धता'मिति,—द्वयोर्द्विवचनमिति द्विवचनं प्राप्नोति ॥ अस्तु तर्ह्ययमेव विग्रहः—अर्द्धं तृतीयमनयोरिति ॥ ननु चोक्तं 'षष्ठ्यर्थो नोपपद्यत' इति ॥ नैष दोषः। इदं तावदयं प्रष्टव्यः—अथेह देवदत्तस्य भ्राते'ति कः षष्ठ्यर्थ इति ?। तत्रैतत्स्यात्—एकस्मात्प्रादुर्भाव इति। एतच्च वार्तम्। तद्यथा—सार्थिकानामेकप्रतिश्रये उषितानां प्रातरुत्थाय प्रतिष्ठमानानां न कश्चित्परस्परमभिसंवन्धो भवति। एवंजातीयकं भ्रातृत्वं नाम। अत्र चेद्युक्तः षष्ठ्यर्थो दृश्यते, इहापि युक्तो दृश्यताम् ॥ इह तर्हि—

प्र.]भवति। समासस्यानुपपत्तिचोदनान्मूलाऽभावाद्द्विवचनप्रसङ्गो न चोदितः। अवयवेनेति। अर्द्धस्य द्वयोश्च यः समुदायः स समासार्थः। समुदायावयवानां च कदाचिदभेदविवक्षा, कदाचिद्भेदविवक्षा। यथा—'ब्राह्मणानां सङ्घः' 'सङ्घीभवन्ति ब्राह्मणा' इति। असिद्वितीय इति। द्वयोः पूरणो द्वितीयः। स च द्व्यात्मकस्य समुदायस्यावयवो भवतीति तदवयवस्य समुदायस्य समासेनाभिधानाद्द्विवचनप्रसङ्गः। अथेति। नह्यत्र स्वस्वामिभावादिः संवन्धोऽस्तीति भावः। एतच्च वार्तमिति। असारवाची वार्तशब्दः। मातापितृभ्यामेव पुत्रयोर्जन्यजनकभावः संवन्धो, न तु परस्परेण कश्चिदित्यर्थः। अत्र चेदिति। परस्परोपकाराऽभावेऽपि यदि समानोदरशायित्वमात्रेण काल्पनिकःसंवन्धस्तदार्द्धस्य द्वाभ्यामेकप्रदेशावस्थानादिनिमित्तः संवन्धो युक्त इत्यर्थः। इह तर्हीति। अर्द्धं तृतीयमनयोरिति द्व—

उ.]'अर्द्धतृतीया'इत्यत्र।'द्विवचनं स्यादि'ति कुतो नोक्तमत आह—समासस्येति। अवयवेन विग्रह इति। अवयवार्थेन वाक्यमित्यर्थः। वर्तिपदार्थोऽवयव इति यावत्। नन्वर्द्धस्य द्वयोश्चेत्यनुपपन्नं, समुदायस्यावयवानतिरिक्ततया अर्द्धं द्वयं च समुदाय इत्येवोचितम्,अवयवेन विग्रहः समुदायः समासार्थ इति चाऽयुक्तमत आह—समुदायावयवानां चेति। समुदायश्चाऽन्यपदस्यैवार्थो न तु समस्यमानपदस्य। स चावयवेभ्यो भिन्नोऽत्रान्यपदार्थः। अवयवगतबाहुल्यस्य च तत्रारोपाद्बहुवचनमिति भावः। द्विवचनप्रसङ्ग इति। उद्भूतावयवभेदस्य समुदायस्य समासार्थत्वात्। तत्र बहुवचनमिवाऽत्रापि द्विवचनं स्यादिति भावः। स्वस्वामीति। साक्षात्संवन्धोपलक्षणम्। क्वचिद्वार्तशब्दस्य युक्तपर्यायत्वदर्शनादाह—असारेति। अनेकार्थोऽयमिति भावः। अवस्थानादिनिमित्त इति। सर्वत्र संबन्धस्य कार्यकारकभावपूर्वकत्वमित्युभयत्रापि काल्पनिकोऽवयवावयविभावो व्यवहारनिमित्त

१ क्वचिन्न।भाष्यमित्यन्ये। २भासमहाकवेरियं कवितेति प्रतीमः। ३ 'त्परस्परसंबन्धो'

अर्द्धतृतीया आनीयन्ता'मित्युक्तेऽर्द्धस्यानयनं न प्राप्नोति ॥ अस्तु तर्ह्ययमेव विग्रहः—अर्द्धं तृतीयमेषामिति॥ ननु चोक्तम्—'असिद्वितीयोनुससार पाण्डवं' 'सङ्कर्षणद्वितीयस्य बलं कृष्णस्य वर्द्धता'मिति,—द्वयोर्द्विवचनमिति द्विवचनं प्राप्नोती'ति ॥ नैष दोषः । अयं तीयान्तः शब्दोऽस्त्येव पूरणे वर्तते, अस्ति सहायवाची । तद्यः सहायवाची तस्येदं ग्रहणम्—'असिद्वितीयः' । असि-सहाय इति गम्यते ॥ एवमपि—'अर्द्धतृतीया' इत्येकस्मिन्नेकवचनं प्राप्नोति । एकार्था हि समुदाया भवन्ति । तद्यथा—शतं यूथं वनमिति॥अस्तु तर्ह्ययमेव विग्रहः—अर्द्धं तृतीयमनयोरिति ॥ ननु चोक्तम्—'अर्द्धतृतीया आनीयन्ता-मित्युक्तेऽर्द्धस्यानयनं न प्राप्नोती'ति ॥ नैष दोषः । भवति बहुव्रीहौ तद्गुण-संविज्ञानमपि।तद्यथा—'शुक्लवाससमानय'लोहितोष्णीषा ऋत्विजःप्रचरन्तीति तद्गुण आनीयते, तद्गुणाश्च प्रचरन्ति ॥ अथ वा पुनरस्त्वयमेव विग्रहः—अर्द्धं तृतीयमेषामिति॥ ननु चोक्तम्—'एकवचनं प्राप्नोती'ति ॥ नैष दोषः । संख्या नामेयं परप्रधाना। सङ्ख्येयमनया विशेष्यम् । यदि चात्रैकवचनं स्यात्सङ्ख्येय-

---

प्र.]रेव समासार्थत्वादानयनं स्यान्नाऽर्द्धस्येत्यर्थः।अस्ति सहायवाचीति । अव्युत्पन्न एवेत्यर्थः । भवति बहुव्रीहाविति । उपलक्षणार्थसहितयोर्द्वयोरानयनं भविष्यती-त्यर्थः । संयोगसमवायलक्षणे संबन्धे यदा बहुव्रीहिस्तदा तद्गुणसंविज्ञानं भवति—'शुक्लवासाः' 'लम्बकर्ण' इति। स्वस्वामिभावादिके तु संबन्धे बहुव्रीहौ तद्गुणसंवि-ज्ञानाऽभावो यथा चित्रगुरिति संक्षेपेण विषयभागः।द्विवचनप्रसङ्गाद्दुष्टोऽयं पक्ष इति मत्वाह—अथ वेति। सङ्ख्या नामेयमिति। अयमर्थः—अर्द्धं तृतीयमेषामिति बहुत्व-सङ्ख्याविशिष्टोऽन्यपदार्थो वाक्य उपात्त इति तथाभूतस्यैव समासो वाचक इति अवश्यं प्रत्याय्यं बहुत्वम् । यथा च 'वृक्षा' इति बहुत्वसङ्ख्यायुक्तः समुदायः प्रती-

---

उ.]इति भावः । यद्वा सम्बन्धत्वेन सम्बन्धोऽसन्नपि विकल्पात्मकज्ञानविषयः पुरुषस्य चैतन्यमितिवत्षष्ठीप्रयोगनिमित्तमिति भावः। नार्द्धस्येति। एवं च द्विवचन-प्रसङ्गोऽपि नोदित इति बोध्यम् । भाष्ये—अस्ति सहायेति। एवं चैकस्यैवाऽन्यपदा-र्थत्वं न तु ध्ववयवसमुदायस्येति भावः । संयोगसमवायेति। एवं च प्रकृते तद्गुण-संविज्ञानस्य वक्तुमशक्यत्वाल्लोहितोष्णीषमानय इत्यादावुपलक्षणार्थसाहित्यप्रयुक्त-वचनाऽदर्शनेन द्विवचनप्रसङ्गाच्च दुष्टोऽयं पक्ष इति भावः। अयमर्थ इति। प्राग्व्या-ख्यात एतद्भाष्याक्षरार्थः । एवं च विग्रह उद्भूतावयवभेदस्य समुदायस्याऽन्यपदा-र्थत्वात्तादृश एव समासशक्य इति तत्प्रत्यायनाय बहुवचनमेवेति तात्पर्यम् ।

---

१ नूनं भासस्य नाटकेष्वेतद्वाक्यं भवेदिति गौडाः । २ 'यथा यूथं शतं' । ३ 'प्रचरन्तीति' । ४ 'प्राप्नोति' । ५ 'अवश्यप्र' ।

मविशेषितं स्यात्॥इह तर्ह्यर्द्धतृतीया द्रोणा इति । अयं द्रोणशब्दः समुदाये वृत्तोऽवयवे नोपपद्यते॥नैष दोषः।समुदायेषु हि प्रवृत्ताः शब्दा अवयवेष्वपि वर्तन्ते । तद्यथा–'पूर्वे पञ्चालाः, उत्तरे पञ्चालाः, तैलं भुक्तं,घृतं भुक्तं,शुक्लो नीलः कपिल इति । एवमयं समुदाये द्रोणशब्दः प्रवृत्तोऽवयवेष्वपि वर्तते। कामं तर्ह्यनेनैव हेतुना यदा द्वौ द्रोणावर्द्धाढकं च तदा कर्तव्यमर्द्धतृतीया द्रोणा इति॥न कर्तव्यम् । समुदायेष्वपि हि शब्दाः प्रवृत्ता अवयवेष्वपि वर्त्तन्ते ॥केष्ववयवेषु[वर्तन्ते] ?,योवयवस्तं समुदायं न व्यभिचरति॥ कं च समुदायं न व्यभिचरति ?॥ अर्धद्रोणो द्रोणम् । अर्द्धाढकं पुनर्व्यभिचरति॥

**सङ्ख्ययाऽव्ययासन्नादूराधिकसङ्ख्याः सङ्ख्येये ॥ २।२।२५॥**

'द्वित्राः' 'त्रिचतुरा' इति कोऽयं समासः ?॥ वहुव्रीहिरित्याह ॥ कोऽस्य विग्रहः ?॥ द्वौ वा त्रयो वेति॥ भवेद्यदा वहूनामानयनं तदा बहुवचनमुपपन्नम् । यदा तु खलु द्वावानीयेते तदा न सिध्यति॥ तदापि सिद्धम्।

प्र.]यते, धवखदिरपलाशा इति च, तथाऽर्द्धतृतीया इत्यपीत्यर्थः । इह तर्हीति अर्द्धस्य द्वयोश्च द्रोणयोर्यः समुदायः स समासार्थस्तत्रार्थस्य द्रोणत्वाऽभावाद्द्रोण नोपपद्यत इत्यर्थः । नैष दोष इति । अर्द्धेऽपि द्रोणत्वोपचाराद्द्रोणशब्दस्य प्रवृत्तिरित्यर्थः । न कर्तव्यमिति । स्वावयव एव समुदायरूपोपचारो नान्यदीयेऽवयव इत्यर्थः । अर्द्धद्रोणो द्रोणमिति । द्रोणेन विनाऽस्याऽभावादित्यर्थः। अर्द्धाढकमिति । चतुराढको द्रोणः । ततश्च विनापि द्रोणेनैकाढकसद्भावेप्यर्द्धस्य भाव

सङ्ख्यया। द्वित्रा इति। वहुव्रीहिनिमित्तस्य डचो दर्शनादात्वाभावाच्च निर्णि वहुव्रीहित्वे विग्रहनिश्चयाय प्रश्नः–कोयं समास इति । स्वाभिप्रायं प्रकाशयितुमाह–कोऽस्येति । यदि तावद्द्वौ त्रय एषामुन्मुग्धानामिति तदा मत्वर्थत्वात् पूर्ववहुव्रीहिः सिद्धः, समासान्तस्तु डज्न सिध्यति, असङ्ख्येयवृत्तित्वाद्वहुव्रीहेः । अथ द्वौ वा त्रयो वेति, तदा पक्षे द्विवचनप्रसङ्गः । भवेद्यदेति । विकल्पो वार्थ

उ.]भाष्ये–कर्तव्यमर्द्धतृतीया इति।प्रयोक्तव्यमित्यर्थः। भाष्ये–योऽवयवस्तं समुदायं न व्यभिचरतीति।यदवयवबुद्धिस्तद्बुद्धिं न व्यभिचरतीत्यर्थः।अन्यथा भावववृत्तित्वरूपो व्यभिचारोऽर्द्धद्रोणेप्यस्त्येवेति तदसङ्गतिः स्पष्टैव।अर्द्धाढकं पुनर्व्यभिचरतीत्यस्य 'द्रोण'मिति शेषः । अर्धाढकं कर्त्तृ । द्रोणेन विनेति । बुद्ध्या विनेत्यर्थः । द्रोणेन—द्रोणबुद्ध्या । एकाढकसद्भावे–तद्बुद्धिसद्भावे सङ्ख्यया। आत्वाभावाच्चेति।'द्व्यष्टन' इत्यात्वस्य बहुव्रीहौ निषेधात्सोपि

१ 'येष्वपि प्रवृ'। २ क्वचिन्न । ३ 'कृष्ण इति' । ४ 'प्रवृत्तो द्रोणशब्दः' ५ 'यदा खल्वपि' । ६ 'तदाऽपि सिद्ध्यति' । ७ 'न्यपदार्थत्वात्' ।

कथम् ? ॥ केचित्तावदाहुः—'अनिर्ज्ञातेऽर्थे बहुवचनं प्रयोक्तव्य'मिति। तद्यथा कति भवतः पुत्राः, कति भवतो भार्या इति?॥ अपर आह—द्वौ वेत्युक्ते त्रयो वेति गम्यते । त्रयो वेत्युक्ते द्वौ वेति गम्यते । सैषा पञ्चाधिष्ठाना वाक्तत्र युक्तं बहुवचनम् ॥

अथ द्विदशाः त्रिदशा[1] इति कोयं समासः ? ॥ बहुव्रीहिरित्याह ॥

प्र.]द्वित्रशब्दः कदाचिद्द्वयोर्वाचकः कदाचित्त्रयाणाम्।अनिर्ज्ञातेऽर्थ इति।केचिद्वचनमेतदित्याहुः । अन्ये तु न्यायसिद्धं मन्यन्ते । अयमर्थः—संशयोऽत्र वार्थो न विकल्पः, स चाऽनियतसङ्ख्याविमर्शीति विमर्शविषयबहुत्वसद्भावाद्बहुवचनम् । अर्थशब्देनाऽत्र सङ्ख्यैवोच्यते । सङ्ख्यायामविज्ञातायामित्यर्थः । कति भवत इति । अन्तर्भावितपूर्वसङ्ख्या बहुत्वसङ्ख्या पृच्छ्यत इति बहुवचनम्। द्वौ वेति । विरुद्धानेकविषयत्वाद्विमर्शस्य पर्यायस्थितद्वित्वत्रित्वाधारवस्तुसङ्कलनया पञ्चाधिष्ठा-

उ.]व्रीहित्वनिश्चायक इति भावः। 'कोऽय'मिति भाष्यस्य—किंविग्रहकोयमित्यर्थ इति तात्पर्यम् । कदाचिद्द्वयोर्वाचक इति । बोधविषयत्वस्यैव विकल्पं 'वा'शब्दो द्योतयतीत्यभिमानः।'बहूनामानयन'मित्यस्य बहूनामानयनान्वय इत्यर्थ इति तात्पर्यम् ।

भाष्ये—यदा द्वावानीयेते इति । द्वावेवानयनान्वयित्वेन बुध्येते इति भावः। अनिर्ज्ञाते इति । परस्परं प्रतिक्षेपकद्वित्वत्रित्ववन्त इति बोधेऽनिर्णीतसङ्ख्यात्वाद्बहुवचनं भवतीति भावः । तदाह—केचिदिति । परस्परप्रतिक्षेपकत्वं हि वाऽर्थः । कदाचिद्द्वयोर्बोधः, कदाचित्त्रयाणामित्यनिर्णीतसङ्ख्यार्थकत्वाद्वचनेन बहुवचनं साध्यमिति तदाशयः । अन्ये त्विति । संशयोऽत्रेति । अनिर्ज्ञात इत्यस्य—निश्चयेनाऽविज्ञाते इत्यर्थ इति भावः । तथा च संशयविषये इति फलितम् । अर्थशब्देनात्रेति । प्रकरणादिति भावः । अन्तर्भावितेति । सङ्ख्यान्तो बहुव्रीहिः । अत एवैको द्वावित्यप्युत्तरम् । अन्यथा बहुविषयप्रश्ने तदुत्तराऽसङ्गतिरिति भावः । विरुद्धानेकेति । विकल्पार्थ एव 'वा'शब्दः । क्रियाविषयत्वस्यैव च विकल्पो नतु बोधविषयत्वस्याऽपि स इति भावः । विमर्शः—परस्परप्रतिक्षेपः । विकल्पे इयत्तानिर्धारणं, संशये त्वनिर्धारणमिति भेदः । यद्वा संशय एव वाऽर्थः । अनेकविषयत्वात्—अनेकविषयरूपत्वात् । विमर्शस्य । संशयस्येत्यर्थः । संशयत्वं च विषयनिष्ठमित्यन्यत्र निरूपितम् । पञ्चाधिष्ठानमुच्यते इति । 'वाच' इति शेषः । 'द्वित्र'शब्दजन्यो बोधो नियमेन पञ्चविषय इति भावः । भाष्ये—द्विदशा इति । अत्रापि डजात्वाऽभावाभ्यां बहुव्रीहित्वस्य निश्चयः । द्वौ दश एषामुन्मुग्धानामिति विग्रहे डजनुपपत्तिः, संख्येये समासाऽवर्त्तनात् । तस्माद्विग्रहविषय एवाऽत्रापि

[1] अत्र वार्त्तिकं लुप्तमन्वेष्यम् ।

कोऽस्य विग्रहः ? ॥ द्विर्दश द्विदशा इति ॥*॥ सङ्ख्यासमासे सुजन्तत्वा-
ङ्ख्याऽप्रसिद्धिः ॥*॥ सङ्ख्यासमासे सुजन्तत्वात्संङ्ख्येत्यप्रसिद्धिः । नहि सु-
न्ता सङ्ख्याऽस्ति ॥ एवं तर्ह्येवं विग्रहः करिष्यते—द्वौ दशतौ द्विदशा इति ।
एवमप्यत्कारान्तत्वात्सङ्ख्ययेत्यप्रसिद्धिः । न ह्यत्कारान्ता सङ्ख्याऽस्ति ।
अस्तु तर्ह्ययमेव विग्रहः—द्विर्दश द्विदशा इति ॥ ननु चोक्तं 'सङ्ख्यासमासे
सुजन्तत्वात्संख्येत्यप्रसिद्धि'रिति ॥*॥ नवाऽसुजन्तत्वात् [ समासे ] ॥
न वैष दोषः ॥ किं कारणम् ? ॥ 'असुजन्तत्वात्' । सुजन्तत्वादित्युच्यते
न चात्र सुजन्तं पश्यामः ॥ किं पुनः कारणं वाक्ये सुज्दृश्यते, समासे
तु न दृश्यते । ॥*॥ सुजभावोऽभिहितार्थत्वात्समासे ॥*॥ समासे सुजभावः
किं कारणम् ? ॥ 'अभिहितार्थत्वात्' । अभिहितः सुजर्थः समासेनेति कृ-

प्र.]नत्वमुच्यते । द्विर्दशेति । अयं भावः—द्वौ दशेति विग्रहो विरोधान्न क्रियते ।
तथा हि—द्वित्वं दशसङ्ख्याया एकत्वान्नोपपद्यते, नाऽपि सङ्ख्येयानां दशत्वात् ।
तस्माद्द्विशब्देन दशत्वावृत्तिगता द्वित्वसङ्ख्या प्रतिपाद्यत इति सुजन्तेन वि-
क्रियते । अत्र दूषणमाह—सङ्ख्यासमास इति । सुजन्तस्य शब्दान्तरत्वात्स-
वाचित्वं नास्तीत्यर्थः । द्वौ दशताविति । द्वौ दशतौ वर्गावित्यर्थः । न वै-
न हि वाक्योपमर्दनेन समासः क्रियते, लौकिके प्रयोगे द्वयोरपि नित्यत्वा-
अन्वाख्यानमात्रं तु शास्त्रेण क्रियते । तत्र वृत्तिविषये सुचमन्तरेणाऽभ्या-
सङ्ख्याभिधायी द्विशब्द इति सङ्ख्यावाचित्वात्समासो भवत्येव । न चात्रे-
वृत्तावित्यर्थः । अभिहित इति । शब्दशक्तिस्वाभाव्यात्समासः सुजर्थं प्रत्या-

उ.]प्रश्नः।तत्र स्वपदविग्रहपरित्यागेनाऽस्वपदविग्रहः कस्मादित्यत आह—अयं -
इति । नापि संख्येयानामिति। तेषां बहुत्वात् । दशत्वावृत्तीति । यद्यपि -
भ्यावृत्तिगणने कृत्वसुच् , एवं च दशत्वावृत्तीत्यसङ्गतम्, तथाप्यावृत्ति-
जन्मगणनमेवाऽत्रेति बोध्यम् । दशत्वावृत्तीत्यस्य—दशत्वावृत्तिजन्मगतेत्य-
यद्यपि सुजन्तोऽप्यावृत्तिगतसङ्ख्याबोधकस्तथापि सङ्ख्यायाः संख्येयस्य वा प्र-
न्येन बोधकः सङ्ख्याशब्द उच्यते । नाऽयं तथा, द्वित्वसंख्यावृत्तिकबहुलवन्त -
प्रतीतेरित्याह—सुजन्तस्येति । शब्दान्तरत्वात्—सङ्ख्यासङ्ख्येयाऽतिरिक्तबोध-
त्वात् । वर्गाविति । 'पञ्चद्शतौ वर्गे वे'ति निपातनाद्वर्गगतद्वित्वप्रतिपाद-
द्विशब्दः सङ्ख्यावाचीत्यर्थः । अभ्यावृत्तिसङ्ख्याभिधायीति । आवृत्तिजन्य-
सङ्ख्याभिधायीत्यर्थः । आवृत्तिश्च समासशक्येति द्विशब्दस्तद्गतसङ्ख्यायामेव व-
इति भावः । भाष्ये— सुजन्तत्वादित्युच्यते इति । त्वया 'सुजन्तत्वात्सङ्ख्ये-

१'सङ्ख्यये'।२'दशताविति द्विदशाः'। ३'सङ्ख्येत्यप्र'।४ क्वचिन्न । ५ 'सुचोऽश्र-

समासे सुज्न भविष्यति ॥ किं च भोः 'सुजर्थे' इति समास उच्यते ? ॥ न खलु 'सुजर्थे' इत्युच्यते, गम्यते तु सुजर्थः ॥ कथम् ? ॥ यावता सङ्ख्येयो यः सङ्ख्यया सङ्ख्यायते, स च क्रियाभ्यावृत्त्यर्थः, स चोक्तः समासेनेति कृत्वा समासे सुज्न भविष्यति । ॥*॥ अशिष्यः सङ्ख्योत्तरपदः सङ्ख्येयवाभिधायित्वात् ॥*॥ अशिष्यः सङ्ख्योत्तरपदो बहुव्रीहिः ॥

प्र.]तीत्यर्थः। इतरः कार्यशब्ददर्शनमाश्रित्याह—किञ्च भो इति।यथा चार्थे द्वन्द्वस्य विधानाद्द्वन्द्वे 'च'शब्दो न प्रयुज्यते तथा यद्ययं समासः सुजर्थे विधीयेत तदा सुचोऽप्रयोगः स्यान्नान्यथेति प्रश्नः । न खल्विति । नहि शब्दैरर्थाभिधानं वाचनिकं, किन्तु स्वाभाविकम् । स चेति । क्रियाभ्यावृत्तिलक्षणोऽर्थः सङ्ख्येयो, न तु दशसङ्ख्या, नापि तत्सङ्ख्यायुक्तः । एतच्च पूर्वमुक्तम् । वाक्ये तु सुचमन्तरेण क्रियाभ्यावृत्तेरनवगमात्सुचः प्रयोगः । ततश्चाऽस्वपदविग्रहः क्रियते, द्विर्दश द्विदशा इति । अनेनैव च न्यायेन द्वौ दशताविति विग्रहः कार्यः। न्यायसाम्यात्तु प्रतीयमानत्वाद्भाष्यकारेण पुनर्न दर्शितः। तदुक्तम्—'शब्दान्तरत्वाद्वाक्येषु विशेषा

उ.]प्रसिद्धि'रित्युच्यते न च वृत्तौ सुजन्तमस्ति,तस्मात्केवलेनैव समासः,स चाऽसुजन्त इति सङ्ख्येति प्रसिद्धिरित्यर्थः । सुजर्थमिति । यदुत्पत्तिगणने द्विशब्दस्तामुत्पत्तिविशिष्टां क्रियामित्यर्थः। नहि शब्दैरिति । तत्र तत्राऽर्थविशेषोपादानमवुधबोधनायाऽन्वाख्याननिमित्तत्वेनाश्रीयते, न तु शक्त्याधानाय । न ह्येतावता सर्वत्र तदुपादानमावश्यकमिति भावः । भाष्ये समासेन तत्प्रतीतौ वीजमाह—यावता सङ्ख्येयो यः सङ्ख्ययेति । सङ्ख्येयत्वयोग्यो यः सङ्ख्यया सङ्ख्यायते—गण्यते, सङ्ख्येयश्च पूर्वपदार्थसङ्ख्यायाः प्रकृतेनोत्तरपदार्थः स च सङ्ख्यारूपः सङ्ख्येयरूपो वा, उभयथापि न द्व्यादिसङ्ख्येयः, आद्यस्यैकत्वात्,द्वितीयस्य दशत्ववत्त्वात् । अतः सामर्थ्यात् क्रियाजन्मरूपः सोऽर्थो वाच्य इति सामर्थ्यादेव स समासेनोक्त इति भावः । तद्ध्वनयन्व्याचष्टे—क्रियाभ्यावृत्तीति।भाष्ये—'स च क्रियाभ्यावृत्त्यर्थ' इति कर्मधारयः। सङ्ख्येयश्च क्रियाजन्मरूपोऽर्थ इत्यर्थः।स चोक्त इति । क्रिया तज्जन्मरूपोऽर्थश्च समासेनोक्त इत्यर्थः । अनेन 'पञ्चकृत्वः पचती'त्यादौ क्रियोत्पत्तिः सुजाद्यर्थ इति बोधितम्। अत्रोक्तत्वादिति वदताऽस्यैकार्थीभावकृतत्वं नेति सूचयति। अपृथगुपस्थितिर्हि सः, न तत्कृतत्वमस्य । एवमन्यपदार्थादयोऽपि न तत्कृता इति वोध्यम् । नन्वनया युक्त्या वाक्येपि सुच्प्रयोगो न स्यादत आह—वाक्येत्विति । वृत्तौ'दश'शब्दो दशदर्थकः, सामर्थ्यात् । उद्भूतावयवभेदो वर्ग एव समासार्थ इति नित्यवहुवचनान्तत्वमिति भावः । अधिकाविंशतिर्यासामिति । किंचिदधिका

१ 'सुजर्थ उच्यते' । २ क्वचिन्न । क्वचिच्च द्विः पठ्यते । ३ 'यथार्थाभि' । ४ 'विधीयेत' । ५ 'युक्ताः' । ६ 'सुचप्र' ।

किं कारणम्?॥ सङ्ख्येयवा[र्था]भिधायित्वात्'।सङ्ख्येयं वार्थश्चाभिधीयते ऽन्यपदार्थं इत्येव सिद्धम् ॥ भवेत्सिद्धमधिकविंशाः अधिकत्रिंशा इति, तद्विचार्यते 'विंशत्यादयो दशदर्थे वा स्युः परिमाणिनि वे'ति, इदं तु सिध्यति–अधिकदशा इति, यत्र नियोगतः सङ्ख्या सङ्ख्येय एव वर्तते।

अथोपदशा इति कोऽयं समासः ? ॥ बहुव्रीहिरित्याह ॥ कोऽत्र विग्रहः ? ॥ दशानां समीपे उपदशा इति ॥ कस्य पुनः सामीप्यमर्थः ?

प्र.]यद्यपि श्रुताः।वृत्तिशब्दोऽन्य एवायमर्थान्तरनिबन्धनः॥'इति।सङ्ख्येयमिति अधिका विंशतिर्यासां ता अधिकविंशा गाव इति सङ्ख्यानवृत्तित्वाद्विंशतिशब्द सङ्ख्येयमन्यपदार्थ उपपद्यत इति भावः।दशदर्थ इति । सङ्ख्याने सङ्ख्येये चेत्यर्थ अधिकदशा इति । दशशब्देन सङ्ख्येयस्याऽभिधानादन्यपदार्थोऽभावः । तत्र दशाद्यर्थं सूत्रं कर्तव्यमेव । इदानीमव्ययं निरूप्यते बहुव्रीह्यव्ययीभावयोर्वि विभागप्रदर्शनार्थम् । उपदशा इति । दशानां समीप इति । सप्तम्या सर्वां प्राधान्ये बहुव्रीहिः,समीपप्राधान्ये त्वव्ययीभाव इति[प्रं]दर्शितं भवति।सामीप्यमिति धर्मेण धर्मी लक्ष्यते, कस्य सामीप्यवानर्थ इत्यर्थः । उपशब्दो हि समीपवा वाच्युपकुम्भादिषु दृष्ट इति तस्य समीपवाचित्वं नास्ति, नापि दशशब्दस्य।सम

उ.]विंशतिः सङ्ख्या यासामत्यर्थः।भाष्ये—वार्थश्चेति । सुजर्थस्तु न विशेष इति स नोक्तः । सङ्ख्यानेति । द्वौ दशतौ विंशतिरिति द्वौ दशतौ परिमाणमस्य विंशति रित्युभयथा तद्व्युत्पत्तेरिति भावः । सङ्ख्येयवाभिधायित्वादिति । 'द्विदशाः' इत्यादावपि द्विरावृत्तदशत्वसङ्ख्यावन्त इत्यर्थात्सङ्ख्येयमेवाऽन्यपदार्थ इति भावः 'द्वित्रा' इत्यत्रापि द्वित्र्यन्यतरा इति बोधाद्वार्थस्य प्राधान्यम् ।'अधिकविंशा'इत्यत्र 'सर्वनामसङ्ख्ययो'रिति विंशतिशब्दस्य पूर्वनिपातः स्यादिति न शङ्क्यं,तत्प्रकरणस्य ऽनित्यत्वात्।तत्र 'द्वित्रा' इत्यत्र वार्थोऽन्यपदार्थः।'अधिकविंशा' इत्यादौ च सङ्ख्येय मिति सर्वत्राप्यन्यपदार्थ इत्येवं सिद्धम् । ङजपि सङ्ख्येये वर्तमानबहुव्रीहेरित्यर्थ सिद्धः। अतिप्रसङ्गस्त्वनभिधानान्नेत्याशयेन पूर्वपक्षे विंशत्यादीनां सङ्ख्यासङ्ख्येयो यपरतया सिद्धावपि दशादीनां सङ्ख्येयमात्रपरतया 'अधिकदशा'इत्यादि पूर्वेण सिध्यतीत्याह–भवेत्सिद्धमित्यादि । यद्यपि 'बहुषु बहुवचन'मिति सूत्रे एकादि बहुशब्दानां सङ्ख्येयोभयपरता भाष्ये उक्ता तथापि सौत्रप्रयोगविषयमेव तदिति बोध्यम् । सप्तम्येति । तया च सन्तीति क्रियाक्षेपाद्ये समीपे सन्ति ते लभ्यन्ते। अन्यथा प्रथमान्तमेव पठेदित्यर्थः।एवं च पूर्वपदार्थप्रधानोयमिति पूर्वेण न सिद्धिरिति भावः। समासस्य समीपिप्रधानताया उक्तत्वेन 'कस्य सामीप्यमर्थ' इत्ययुक्तमित्यत आह—धर्मेणेति । समीपिशब्दाद्ब्राह्मणादित्वात्ष्यञित्याशयः । आराच्छब्दवदि

१ एवः क्वचिन्न । २ वार्तिकं लुप्तम् । ३ 'समीपे दशानामुप' । ४ क्वचिन्न ।

उपस्य ॥ यद्येवं, नान्यपदार्थो भवति ॥ तत्र च प्रथमानिर्दिष्टं सङ्ख्याग्रहणं शक्यमकर्तुम्[1] ॥ ॥*॥ मत्वर्थे वा पूर्वस्य विधानात् ॥*॥अथ वा मत्वर्थे पूर्वो योगः।अमत्वर्थार्थोऽयमारम्भः[2]॥॥*॥कवभावार्थंवा॥*॥अथ वा कब्मा भूदिति॥

**दिङ्नामान्यन्तराले ॥२।२।२६॥ तेन सहेति तुल्ययोगे ॥ २।२।२८ ॥**

॥*॥ दिक्समाससहयोगयोश्चान्तरालप्रधानाभिधानात् ॥*॥

दिक्समाससहयोगयोश्चाऽशिष्यो बहुव्रीहिः ॥ किं कारणम् ? ॥ 'अन्तरालप्रधानाभिधानात्' । दिक्समासे सहयोगे चान्तरालं प्रधानं चाभिधीयते तत्रान्यपदार्थ इत्येवं[3] सिद्धम् ॥ यद्येवं—दक्षिणपूर्वा दिक्; समानाधिक-

प्र.]स्येति चेत्तदाऽस्त्येवान्यपदार्थ[वृत्तिर्वे]मिति प्रश्नः। उपस्येति। आराच्छब्दवदनेकार्थत्वादुपशब्दस्य समीपवानर्थः । स एवाह—यद्येवमिति । यदोपशब्दस्यैवावार्थ इत्यर्थः । एवमव्ययासन्नादूराधिकग्रहणं स्थापितम् । सङ्ख्याग्रहणं तु न कर्तव्यम् 'द्वित्रा' इत्यादौ वाऽर्थस्यान्यपदार्थत्वादित्याह—तत्रेति । इदानीमेतदपि स्थापयन्नाह—अर्थवेति । ननु मत्वर्थग्रहणं तत्र न करिष्यते द्वित्रा इति सिद्ध्य इत्याह—कवभावार्थं वेति । 'शेषाद्विभाषे'त्यत्र शेषाधिकारविहितो बहुव्रीहिर्गृह्यते, 'अनेकमन्यपदार्थे' इत्यत्रैव च शेषग्रहणमनुवर्तते, नोत्तरेषु योगेषु॥[ सङ्ख्यया ]॥

दिङ्नामान्यन्तराले।तुल्यन्यायत्वाद्योगद्वयस्य सहविचारः।दिक्समाससहयोगयोरिति । 'अशिष्य' इति पूर्ववार्तिकोक्तमेक्ष्यते । दक्षिणस्याश्च पूर्वस्याश्च दिशो-

उ.]त्यनेकार्थत्वमात्रे दृष्टान्तः। अत्र निपातस्याप्युपस्य वाचकत्वं द्रष्टव्यम्। अतएव तदर्थस्य विशेष्यतया भानम् । वार्थस्येति । सङ्ख्येयस्योपलक्षणमेतत् । 'अधिकदशा इत्याद्यर्थंत'दिति भाष्यकृतोक्तम् । इदानीं वार्तिककार आह—मत्वर्थे इति । एवं च पदानामसामानाधिकरण्याद्वित्रा द्विदशा इत्याद्यसिद्धिरिति भावः । 'द्वित्रान्यत्रे' त्यादौ परिनिष्ठितविभक्त्या समासे शेषग्रहणबोधितप्रथमान्तत्वाऽभाव इत्यपि बोध्यम् । कवभावार्थं वेति । अनन्तरबहुव्रीह्यधिकारापेक्षानुक्तसमासान्तत्वरूपशेषत्वस्यैव भाष्ये वक्ष्यमाणत्वादिति भावः।अनेन समासे तु शेषाधिकारस्थसमासाऽभावाच्चेति तात्पर्यम् । शेषाधिकारेति । न च 'समानाधिकरणाना'मित्यादिवार्त्तिकप्रत्याख्यानरीत्या शेषग्रहणमपि प्रत्याख्यातमेव, स्पष्टं चाकडारसूत्रादावुक्तं, तत्कथमेतदर्थलाभ इति वाच्यम्, अनभिधानस्य दुर्ज्ञेयतया तदर्थमेतदर्थं च शेषग्रहणमावश्यकमित्याशयात् । प्रत्याख्यानं च प्रौढ्या । अनभिधानमगतिकगतिरिति तत्सूत्रे उक्तत्वात् ॥ [ सङ्ख्यायाः ] ॥

दिङ्नामान्य । 'तत्र तेनेद'मिति मध्यपतितसूत्रमतिक्रम्य योगद्वयस्य सहविचारे कारणमाह—तुल्यन्यायत्वादिति । भाष्ये—सहयोगयोरिति । सहेन

1 'कर्तुमशक्यं' । २ 'अमत्वर्थोऽय' । ३ 'इत्येवं'। ४ क्वचिन्न ।५'मत्वर्थे वेति'।

रणलक्षणः पुंवद्भावो न प्राप्नोति ॥ अद्य पुनरियं सैव दक्षिणा सैव पूर्वेति कृत्वा समानाधिकरणलक्षणः पुंवद्भावः सिद्धो भवति ॥ न सिध्यति । भाषितपुंस्कस्य पुंवद्भावो न चैतौ भाषितपुंस्कौ ॥

ननु च भोः[1] दक्षिणशब्दः पूर्वशब्दश्च पुंसि भाष्येते॥समानायामाकृतौ यद्भाषितपुंस्कम् , आकृत्यन्तरे चैतौ भाषितपुंस्कौ । दक्षिणा पूर्वेति दिक्शब्दौ,दक्षिणः पूर्व इति व्यवस्थाशब्दौ॥ यदि पुनर्दिक्शब्दा अपि व्यवस्

---

प्र.]यदन्तरालं दिक्सा 'दक्षिणपूर्वे'त्युच्यते, तत्राऽन्तरालस्यान्यपदार्थत्वात् पूर्वेण सिद्धः समासः । 'सपुत्र' इत्यस्यापि समासस्य पिता प्रधानमन्यपदार्थोऽभिधेय इति नार्थः सूत्रद्वयेनेत्यर्थः । अद्य पुनरिति । सूत्रारम्भविशिष्टे काले इत्यर्थः। तत्रारब्धेऽयमर्थो व्याख्यायते—अन्तराले यानि दिङ्नामानि वर्तन्ते तानि समस्यन्ते। दक्षिणादीनां च सामीप्यादन्तरालवृत्तित्वम् । ततश्च दक्षिणा चासौ पूर्वेति सामा नाधिकरण्यात्पुंवद्भावः सिध्यति । सूत्रे त्वनारब्धेऽन्यपदार्थसंपादनाय दक्षिणपूर्व शब्दयोः स्वार्थ एव वृत्तिरुपगन्तव्या, ततो वैयधिकरण्यम् । ननु सामानाधिक ण्येऽपि विशेषणसमासः सिध्यतीति नारब्धव्यमिदम् । नैतदस्ति । पूर्वपदप्रकृति स्वरार्थं, 'विभाषा दिक्समासे' इति विकल्पितसर्वनामसंज्ञार्थं च बहुव्रीहिसंज्ञैष्टव्या । न सिध्यतीति । नहि सामानाधिकरण्यमात्रप्रतिबद्धः पुंवद्भावः, किं तु भाषितपुंस्कत्वनिबन्धनोपि । समानायां चाकृतौ यद्भाषितपुंस्कं तस्य पुंवद्भावः। भाषितपुंस्कशब्दस्य ह्यर्थः प्रवृत्तिनिमित्तलक्षणोऽन्यपदार्थोऽभिधेयो न शब्दः दिक्शब्दाविति । विना प्रवृत्तिनिमित्तेन दिग्विशेषे रूढ्या प्रवृत्तावित्यर्थः। यदि पुनरिति । ततश्च व्यवस्थाकृतौ समानायां भाषितपुंस्कत्वस्योपपत्तिः । क

---

उ.]योगोऽस्येति विग्रहेण 'सपुत्र' इति समास उच्यते । तत्राऽन्यपदार्थ इत्ये वेति । सहशब्दस्य साहित्यमेवार्थस्तद्वान्पित्रादिस्तु समासार्थ इति भावः । 'समा नाधिकरणाना'मित्यस्य 'शेष' इत्यस्य चाऽपरामर्शेनेदम् । अत एव वक्ष्यति 'मत्वर्थे वा पूर्वस्ये'ति । नारब्धव्यमिति । कर्मधारयेणैव पुंवत्त्वमपि सिध्य तीति भावः । बहुव्रीहिसंज्ञैवेति । द्वन्द्ववारणार्थं बहुव्रीहावित्यावश्यकम् । तद एतदभावे प्रतिपदोक्तस्याऽभावात् प्रतिपदोक्तत्वाऽर्थमेव वा इदं कार्यमित्याशयः।

प्रवृत्तिनिमित्तलक्षण इति । भाषितः पुमान्यस्मिन्नर्थे इति व्युत्पत्तेरिति भावः । न शब्द इति । तत्र ह्यन्यपदार्थे यत्किंचिदर्थमादाय स्यादेव भाषित पुंस्कत्वमिति भावः । विना प्रवृत्तिनिमित्तेनेति । शब्दातिरिक्तप्रवृत्तिनिमित्ते त्यर्थः । यद्वा व्यक्तिमात्रबोधस्ततो रूढ्येति दक्षिणादिशब्द एव तत्र प्रवृत्तिनिमित्त

---

१ क्वचिन्न । २ 'शब्दः' । ३ 'दक्षिणा' । ४ 'पदार्थो' ।

शब्दाः स्युः ॥ कथं यानि दिगुपदिष्टानि कार्याणि ? ॥ यदा दिशो व्यवस्थां वक्ष्यन्ति॥ यदि हि यो यो दिशि वर्तते स सदिक्शब्दः,रमणीयादिष्वति-प्रसङ्गो भवति–रमणीया दिक्शोभना दिगिति ॥ अथ मतमेतत्–दिशि दृष्टो दिग्दृष्टः, दिग्दृष्टः शब्दो दिक्शब्दः, यो दिशं न व्यभिचरतीति, न रमणीयादिष्वतिप्रसङ्गो भवति, पुंवद्भावस्तु न प्राप्नोति ॥ एवं तर्हि ॥*॥ "सर्वनाम्नो वृत्तिमात्रे पुंवद्भावो वक्तव्यो दक्षिणोत्तरपूर्वाणामित्येवमर्थम्" ॥*॥ एवं च कृत्वाऽस्तु–'दिक्समाससहयोगयोरन्तरालप्रधानाभिधाना'दित्येव ॥ ननु चोक्तं–'दक्षिणपूर्वा दिक् ,–समानाधिकरणलक्षणः पुंवद्भावो न प्राप्नो-ती'ति ॥ नैष दोषः । सर्वनाम्नो वृत्तिमात्रे पुंवद्भावेन परिहृतम् ।

प्र.]यानीति । यदि प्रवृत्तिनिमित्ताश्रयेण दिशि वर्तन्ते न तु रूढ्या तदा दिक्शब्द-त्वानुपपत्तिः । यदा दिश इति । विषयवशात्प्रवृत्तिनिमित्ताश्रयायामपि प्रवृत्तौ दिक्शब्दत्वं पूर्वादीनां संभवतीत्यर्थः । दिशि दृष्ट इति । रूढिरूपेण तत्र प्रवृत्त इत्यर्थः । अत एवैन्द्र्यादयो यौगिकत्वान्न दिक्छब्दाः । दक्षिणोत्तरपूर्वाणामिति । अत्र हि वैयधिकरण्यात्पुंवद्भावो न प्राप्नोतीत्यवश्यं वाच्यं 'सर्वनाम्न' इति । तेनैव दक्षिणपूर्वेत्यादावपि भविष्यतीति नार्थोऽनेन सूत्रेणेत्यर्थः । [ दिङ्मात्रमान्य ] ॥

उ.]तदभाव एव वा,न तु व्यवस्थाविषयं प्रवृत्तिनिमित्तमित्यर्थः।व्यवस्थाशब्दाविति भाष्यस्यापि–व्यवस्थाविषयप्रवृत्तिनिमित्तकावित्यर्थः । नहि स्वाभिधेयापेक्षा-वधिनियमरूपव्यवस्था कस्यापि प्रवृत्तिनिमित्तं भवति। दिक्शब्दानां सर्वनामत्वमवश्य-मेवेष्टव्यमिति तात्पर्यकस्य 'यदि पुनर्दिक्शब्दा अपि व्यवस्थाशब्दाः स्यु'रिति भाष्यस्य 'स्यात्तर्हि भाषितपुंस्कत्व'मिति शेषः।दिग्वाचकपूर्वादीनां पृथ्वीमध्यभागावधिकोदया-चलादिपर्यन्तदेशरूपोपाधिविशिष्टदिशि प्रवृत्तिरितिभावः।व्यवस्थाकृताविति। व्यव-स्थाविषयप्रवृत्तिनिमित्ते समाने इत्यर्थः । ननु रूढ्येति । शब्दातिरिक्तप्रवृत्तिनिमित्त-निरपेक्षरूढ्येत्यर्थः। प्रवृत्तिनिमित्तविशेषानपेक्षदिग्रूढशब्दत्वं हि तत्त्वमिति भावः । विषयवशादिति । दिगादिरूपविषयवशादित्यर्थः । अस्य–'दिक्शब्दत्व'मित्यनेना-न्वयः। भाष्ये–यदा दिश इति । यदा दिग्वृत्तिव्यवस्थाविषयप्रवृत्तिनिमित्तं वक्ष्य-न्तीत्यर्थः । आकाशवदेकस्यैव दिक्पदार्थस्यौपाधिको भेदः । उपाधिश्च पृथिवी-मध्यं, तत्प्रान्तस्थाश्च चत्वारः पर्वताः। एवं च तत्राप्युदयाचलसंनिहितत्वादिकमेव प्रवृत्तिनिमित्तम्। अवधिस्तु परं पृथ्वीमध्यमेकमेव।एवं च पुंवत्त्वं सिद्धम् । दिक्श-ब्दत्वं च विशेष्यतया दिग्बोधकशब्दत्वमेवेत्यभिमानः । दिशि दृष्ट इति । दिशि दृष्ट्वा दृष्ट इत्यर्थः । यो दिशमिति । दिगतिरिक्तमर्थं प्रवृत्तिनिमित्ततयाऽपि यो

१ 'दिगप'।२ 'शब्द इति दिशं यो न'।३ 'प्रसङ्गो न'।४ 'नाधिकरणः पुंव'।५ 'तः'।

*॥मत्वर्थे वा पूर्वस्य विधानात् ॥*॥ अथ वा मत्वर्थे पूर्वो योगोऽमत्वर्थोऽयमारम्भः ॥*॥ कृभावार्थो वा ॥*॥ अथ वा क्त्वसा भूदिति ॥

## तत्र तेनेदमिति सरूपे ॥ २।२।२७ ॥

॥*॥ तृतीयासप्तम्यन्तेषु च क्रियाभिधानादशिष्यो बहुव्रीहिः॥*॥ तृतीयासप्तम्यन्तेषु चाऽशिष्यो बहुव्रीहिः। किं कारणम् ? ॥ 'क्रियाभिधानात्' क्रियाऽभिधीयते। तत्रा 'ऽन्यपदार्थ' इत्येव सिद्धम् ॥*॥ न वैकशेषप्रतिषेधार्थम् ॥*॥ नवाऽशिष्यः ॥ किं कारणम् ? ॥ [ एकशेषप्रतिषेधार्थम् ] एकशेषप्रतिषेधार्थमिदं वक्तव्यम् ॥*॥ पूर्वदीर्घार्थं च ॥*॥ पूर्वदीर्घार्थं चेदं वक्तव्यम्। केशाकेशि ॥ स्यादेतत्प्रयोजनं यदि नियोगतोऽस्याऽनेनैव दीर्घ

प्र.] तत्र तेनेदम्। क्रियाभिधानादिति। इतिकरणाद्विवक्षार्थात्केशाकेशि दण्डादण्डीति समासो युद्धक्रियायामेव भवति, सा चान्यपदार्थ इति पूर्वेण सिद्धः समास इत्यर्थः। न वेति। केशेषु केशेषु च गृहीत्वेदं युद्धं, दण्डैश्च दण्डैश्च प्रहृत्येदं युद्धमिति ग्रहणे प्रहरणे च सहविवक्षितत्वात्सरूपत्वादेकविभक्तित्वाच्चैकशेषः प्राप्तो वचनसामर्थ्यात्समूहाऽन्यथानुपपत्त्या समूहविषययाऽनया बहुव्रीहिसंज्ञयाऽनवकाशया बाध्यते। पूर्वयोगेण तु परत्वादेकशेषो न शक्यते बाधितुम्, अन्यपदार्थापेक्षत्वात्तस्य बहिरङ्गत्वात्। पूर्वदीर्घार्थं चेति। 'तत्र तेन आ इदं' मित्याकारप्रश्लेषेण पूर्वपदस्य दीर्घो विधीयते। उत्तरपदस्य तु यस्येति लोपेन

उ॰]नाश्रयत इत्यर्थः।एवं च तत्र शब्दस्यैव प्रवृत्तिनिमित्तत्वेन व्यक्तिमात्रशक्त वा समानायामाकृतौ भाषितपुंस्कत्वाऽभाव इति भावः। सर्वनामत्वं तु भवत्येव पृथिवीमध्यात्तत्तत्पर्यन्तदेशरूपोपाधिविशिष्टदिश एव पूर्वादिशब्दवाच्यत्वेन व्यवस्थाविषयत्वाऽक्षतेरिति दिक्। भाष्ये—कृभावार्थो वेति। शेषाधिकारस्थबहुव्रीहावेव तद्विधेरिति भावः। [दिङ्नामान्यन्तराले] ॥

तत्र तेनेदम्। युद्धक्रियायामेवेति। इदं च स्वोक्तोदाहरणविशेषाभिप्रायम्। अत एव 'कर्णाकर्णि प्रथितमयश' इत्यादिप्रयोगाः सङ्गच्छन्ते। अत एव भाष्ये—'क्रियाभिधाना'दित्येवोक्तम्। सिद्धः समास इति। पूर्वसूत्रेण। क्वचित्तु पूर्वेणेति पाठोपि। सरूपत्वादिति। विरूपाणां त्वनभिधानात्समासो नेति भावः। समूहान्यथानुपपत्त्येति। सुप्सुपेत्यधिकारात्तस्याः पदसमूहवृत्तित्वादिति भावः। अन्यपदार्थापेक्षत्वादिति। सुबुत्पत्त्यपेक्षत्वादित्यपि बोध्यम्। पूर्वदीर्घार्थं चेति भाष्ये। इतिशब्दादिदमपि लभ्यमित्यर्थः।

१ 'अमत्वर्थोऽय'। २ 'भावार्थो वा'। ३ 'अशिष्य'इत्यादि क्वचिन्न। ४ 'दीर्घः स्यात्'। ५ 'पूर्व दीर्घा'। ६ क्वचिन्न। ७ 'दीर्घः स्यात्'। ८'नामसञ्ज्ञा तु'

स्यात् । अथेदानीमन्येषामपि दृश्यत इति दीर्घत्वं, न प्रयोजनं भवति ॥ ॥*॥ मत्वर्थे वा पूर्वस्य विधानात् ॥*॥ अथ वा मत्वर्थे पूर्वो योगोऽमत्वर्थोऽयमारम्भः ॥*॥ कवभावार्थं वा ॥*॥ अथ वा कब्मा भूदिति ॥

## चार्थे द्वन्द्वः ॥ २।२।२९ ॥

चार्थ इत्युच्यते, चश्चाव्ययं, तेन समासस्याऽव्ययसंज्ञा प्राप्नोति ॥ नैष दोषः । पाठेनाऽव्ययसंज्ञा क्रियते । न च [ द्वन्द्वः ] समासस्तत्र पठ्यते । पाठेनाप्यव्ययसंज्ञायां सत्यामभिधेयवल्लिङ्गवचनानि भवन्ति । यश्चेहार्थोऽभिधीयते न तस्य लिङ्गसङ्ख्याभ्यां योगोऽस्ति ॥ नेदं वाचनिकम्— अलिङ्गताऽसङ्ख्यता वा ॥ किं तर्हि ? ॥ स्वाभाविकमेतत् । तद्यथा—समानमीहमानानां चाधीयानानां च केचिदर्थैर्युज्यन्तेऽपरे न । न चेदानीं कश्चिदर्थवानिति कृत्वा सर्वैरर्थवद्भिः शक्यं भवितुं, कश्चिद्वाऽनर्थक इति सर्वैरनर्थकैः । तत्र किमस्माभिः शक्यं कर्तुम्—यत्प्राक्समासाच्चार्थस्य लिङ्गसङ्ख्याभ्यां योगो नास्ति, समासे च भवति । स्वाभाविकमेतत् । अथ वाऽऽश्रयतो लिङ्गवचनानि भविष्यन्ति । यथा गुणवचनेषु । गुणवचनानां हि शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति । तद्यथा—शुक्लं वस्त्रं, शुक्ला शाटी, शुक्लः कम्बलः, शुक्लौ कम्बलौ, शुक्लाः कम्बला इति,—यदसौ द्रव्यं श्रितो भवति गुणस्तस्य यल्लिङ्गं वचनं च तद्गुणस्यापि भवति । एवमिहापि यदसौ द्रव्यं श्रितो भवति

प्र.]भाव्यमिति प्रयोजनाऽभावादात्वाऽभावः। अथेदानीमिति। एव च 'मुष्टीमुष्टी'त्यादि भवति । आकारप्रश्लेषे तु 'मुष्टामुष्टी'ति स्यात् । कवभावार्थं वेति । 'इच्कर्मव्यतिहार' इति कवभावपक्षे सावकाशः । पक्षान्तरे तु परत्वाद्बाधित्वा कप्प्राप्नोति । शेषग्रहणेन च शेषाधिकारो गृह्यते नतूपयुक्तादन्यः ॥ [तत्र तेनेद]॥

चार्थे द्वन्द्वः।चार्थ इत्युच्यत इति।यदि तु समाहारेतरेतरयोगयोरित्युच्यते तदा न दोषः स्यात् । प्राक्समासादिति । वाक्ये चशब्देन द्योत्यस्यार्थस्य लिङ्ग-

उ.]पक्षान्तरे त्विति।प्रत्याख्यानपक्षे त्वित्यर्थः। नतूपयुक्तादिति।'इत्यभिमान'इति शेषः । 'उपयुक्तादन्यः शेष' इत्यर्थस्य 'शेषा'दिति सूत्रे भाष्यकृतैव स्थापयिष्यमाणत्वात् । आवृत्त्या शेषाधिकारस्थादित्यर्थ इति पूर्वसूत्रस्थ'कवभावार्थं चे'ति वार्त्तिकाज्ज्ञायते । तस्मात्कवभावार्थं चेति,—अत्रैकदेश्युक्तिः , वैयधिकरण्यात्पूर्वेण न सिद्ध्यतीति अस्य सूत्रस्यावश्यकत्वेऽनेनापि कवभावः सिध्यतीत्याशयेन ॥

चार्थे द्वन्द्वः।भाष्ये—चार्थ इत्युच्यते इति।उभयत्रापि साहित्यं समूहो विशेष्यः। स च समाहारेऽनुद्भूतावयवभेदोऽन्यत्र तु विपरीत इत्याशयेनेदम्। यद्यपि चार्थोऽसत्त्वभूतो विशेषणं च,तथापि चार्थ इत्यस्य तत्सदृशो इत्यर्थ इति बोध्यम् ।

१ 'पूर्वयोगः' । २ 'र्थोऽयमा' । ३ 'स्याप्न' । ४ क्वचिन्न । ५ 'पाठेनाऽव्यय' । ६ 'भविष्यन्ति' । ७ 'च' । ८ चः क्वचिन्न । ९ 'भवतीति' ।

समासस्तस्य यल्लिङ्गं वचनं च तत्समासस्यापि भविष्यति ॥ अथेह कस्मान्न भवति—याज्ञिकश्चायं वैयाकरणश्च, कठश्चायं बह्वृचश्च, औक्थिकश्चायं मीमांसकश्चेति?॥ शेष इति वर्तते । अशेषत्वान्न भविष्यति॥ यदि शेष इति वर्तते-

'उपास्नातं स्थूलसिक्तं तूष्णीङ्गङ्गं महाह्रदम् ।
'द्रोणं चेदशक्तो गन्तुं मा त्वा तौप्तां कृताकृते' ॥

प्र.]सङ्ख्ये न स्तः । समासस्य तु वाचकत्वात्तदर्थस्य लिङ्गसङ्ख्याभ्यां ... इत्यर्थः । श्रितो भवति समास इति । 'समास'शब्देन समासार्थश्चार्थ उच्यते तस्य समुच्चितद्रव्याश्रये लिङ्गसङ्ख्ये भविष्यत इत्यर्थः। याज्ञिकश्चायमिति। एकस्मिन् धर्मिण्यनेकधर्मसमुच्चयाच्चार्थसद्भावाद्द्वन्द्वसंज्ञाप्रसङ्गः। ततश्चाभ्यर्हितत्वाद्वैयाकरणशब्दस्यैव पूर्वनिपातः स्यात् । तत्पुरुषे तु काणखञ्जवदनियमः । पं... कार्यत्वे चाऽयं दोषः । एकसंज्ञाधिकारे तु विशेषविहितत्वात्तत्पुरुषसंज्ञैव भवतीति दोषाऽभावः। अशेषत्वादिति । 'विशेषण'मित्यत्रोपयुक्तत्वादित्यर्थः। उपास्नातादय... पञ्च तीर्थविशेषास्तांश्चेत्त्वं गन्तुं शक्तवांस्ततः कृताकृते सुकृतदुष्कृते त्वां मा ताप्तां,... तापयत इत्यर्थः । तीर्थस्नानप्रशंसेयम् । कृतं क्षीणं सत्तापयत्यकृतं त्वनिष्टफलहेतुत्वेन 'कृताकृते' इत्येतदत्रोदाहरणम् । अत्र 'क्तेन नञ्विशिष्टेनान'ञिति समा...

उ.]पूर्वपक्ष्याह—पाठेनापीति । अपिना पाठेन तस्याः कर्तुमशक्यत्वं सूचितम् । स्वरादिचायोराकृतिगणत्वात् । अभिधेयवद्विशेष्यवल्लिङ्गादिकं वक्तव्यं, विशेष्य... चार्थस्य लिङ्गादिराहित्यात्तद्वक्तुमशक्यमिति भावः । नेदं भाष्यं समाहारविषयं तत्र नपुंसकत्वैकवचनयोर्नियतत्वात् , तस्मादितरेतरयोगविषयम् । तच्च त... चार्थस्य विशेष्यत्वे सङ्गच्छते नान्यथेति बोध्यम् । समुच्चितद्रव्याश्रये इति। समाहारे तु लिङ्गं वाचनिकम्।वचनमपि 'द्वन्द्वश्चे'त्यादौ एकवचनशब्देन योगा... समाहारस्य निर्देशाज्ज्ञापकसिद्धमितीतरेतरयोगविषये एव पूर्वपक्षसिद्धान्तौ त्विति भावः । एवं चेतरेतरयोगे समाहारो द्रव्येणाऽभेदमापन्न एवोच्यते इत्याहुः । चार्थसद्भावादिति । अत एव तद्विग्रहे चस्य प्रयोगः, याज्ञिकत्वसमानाधिकरणवैयाकरणत्ववान्याज्ञिक इति बोध इति भावः । स च वाक्ये 'च'शब्दबलात्सः... समासबलादिति बोध्यम् । वैयाकरणशब्दस्यैवेति । अभ्यर्हितत्वाऽक्षमायां ... अल्पाच्तरत्वाद्याज्ञिकशब्दस्यैव स स्यादिति बोध्यम् । विशेषेति । 'चार्थे' इति व्यधिकरणधर्मबोधके सावकाशम् । भाष्ये—अशेषत्वादिति। समासघटकपदबोध्यप्रधानार्थस्यैव चार्थसम्बन्धित्वे द्वन्द्वः, प्रधानाप्रधानयोरिति न्यायादित्याशयो गूढः । सुकृतदुष्कृते इति । कृताऽकृतशब्दयोस्तयो रूढिरिति भावः । नन्वत्र वैयधिकरण्यात्कथं 'क्तेन न'ञित्यस्य प्राप्तिरत आह—कर्मसामान्यं चेति । ...

१ 'उपस्नातं' । २ 'तूष्णीगङ्ग' । ३ 'तप्तां' । ४ 'तीक्ष्णां सन्ता' ।

–इत्येतन्न सिध्यति ॥ नैष दोषः । अन्यद्धि कृतमन्यदकृतम् ॥*॥चार्थे द्वन्द्ववचनेऽसमासेपि चार्थसंप्रत्ययादनिष्टप्रसङ्गः ॥*॥ चार्थे द्वन्द्ववचनेऽसमासेपि चार्थसंप्रत्ययादनिष्टं प्राप्नोति,–

'अहरहर्नयमानो गामश्वं पुरुषं पशुम् ।
वैवस्वतो न तृप्यति सुराया[1] इव दुर्मदी ॥' इति ॥

'इन्द्रस्त्वष्टा वरुणो वायुरादित्य' इति ॥*॥ सिद्धं तु युगपदधिकरणवचने द्वन्द्ववचनात् ॥*॥ सिद्धमेतत् ॥ कथम् ? ॥ [युगपदधिकरणवचने द्वन्द्ववचनात् ]। युगपदधिकरणवचने द्वन्द्वो भवतीति वक्तव्यम् ॥ ॥*॥ तत्र पुंवद्भावप्रतिषेधः ॥*॥ तत्रैतस्मिँल्लक्षणे पुंवद्भावस्य प्रतिषेधो वक्तव्यः । पट्वीमृद्व्यौ । समानाधिकरणलक्षणः पुंवद्भावः प्राप्नोति ॥

प्र.]धानादशेषत्वाद्द्वन्द्वऽप्रसङ्गः।कर्मसामान्यं च कृताकृतयोरेकमधिकरणं मत्वा प्रश्नः। अन्यद्धि कृतमिति । ततश्च वैयधिकरण्यात्तत्पुरुषाऽभावाच्छेषत्वमेव । न ह्यत्रैकं कर्माभिधेयत्वेन विवक्षितं, किं तर्हि ?, भिन्ने कर्मणी समुच्चिते । चार्थे द्वन्द्ववचन इति । चार्थानुवादेन द्वन्द्वस्य विधानात्तस्य चाऽनिष्टेऽपि विषये सद्भावादतिप्रसङ्ग इत्यर्थः । दुर्मदीति । दुःखेन यो माद्यति स यथा सुरया न तृप्यति एवं यमो गवादीन्नयमान इत्यर्थः । तत्र नयनक्रियायां गवादीनां समुच्चयाच्चार्थसद्भावादस्ति द्वन्द्वप्राप्तिः । इन्द्र इति । इन्द्रादीनां लोकपालत्वाद्गम्यमानपालनक्रियायां समुच्चयोऽस्ति। सिद्धं त्विति–न्यासान्तरेणाऽतिप्रसङ्गपरिहारः। युगपदेकैकेन शब्देनाधिकरणमभिधेयं द्वन्द्ववाच्यं समुदायरूपं यदोच्यते तदा द्वन्द्वः । 'गामश्व'मित्यादौ तु परस्परनिरपेक्षाः स्वतन्त्रा गवादयो भिन्नैरेव शब्दैः पृथक्प्रत्याय्यन्त इति युगपद्वाचित्वाऽभावाद्द्वन्द्वाऽभावः।पट्वीमृद्व्याविति। एकैकेन शब्देनार्थद्वयस्याभिधा-

उ.]सामान्यस्य विशेषाश्रयत्वादिति भावः।भिन्ने–धर्माधर्मलक्षणे। समुच्चिते।मा तातामिति क्रियायां समुच्चिते । केचित्तु 'कृताऽकृते' इत्यस्य पापपुण्ये क्रमेण कृताऽकृते इत्यर्थमाहुः । अतिप्रसङ्ग इति । द्वन्द्वसंज्ञाऽतिप्रसङ्ग इत्यर्थः । 'गामश्वं पुरुषं पशु'मिति वाक्येपि परस्परसाहित्यरूपे इतरेतरयोगे पदानां वृत्तेर्द्वन्द्वसंज्ञा स्यादिति भावः । दुःखेनेति । क्लेशेनेत्यर्थः। अल्पपानेन मदानुत्पत्तिर्यस्येति फलितम् । सुराया इति शेषषष्ठी । सुरयेत्यर्थः । 'इन्द्रादीना'मिति भाष्ये 'लोकानां पालका' इत्यध्याहार्यमिति भावः । धवखदिरयोरिवाऽत्रापि सहविवक्षा स्यादत आह–येऽर्था इति । युगपदनुभवाऽभावादिति । परस्य स्वज्ञानसदृशज्ञानसमर्पणाय शब्दप्रयोग इति भावः । विप्रतिषिद्धत्वादेव, युगपदभिधानानुपपत्तौ

१ 'सुरया' । २ क्वचिन्न । ३ लुप्तं । ४ 'करणे द्वन्द्वो'। ५'गम्यमानक्रियायां' ।

॥*॥विप्रतिषिद्धेषु[1] चानुपपत्तिः ॥*॥ विप्रतिषिद्धेषु युगपदधिकरणवचनताया अनुपपत्तिः। शीतोष्णे सुखदुःखे जननमरणे ॥ किं कारणम्? ॥सुखप्रतिघातेन हि दुःखम्, दुःखप्रतिघातेन च सुखम् ॥ यत्तावदुच्यते 'तत्र पुंवद्भावप्रतिषेधः' इति। इदं तावदयं प्रष्टव्यः—अथेह पुंवद्भावः[2] कस्मान्न भवति-दर्शनीयाया माता दर्शनीयामातेति ?। अथ मतमेतत्—'प्राक्समासाद्यत् सामानाधिकरण्यं तत्र पुंवद्भावो भवती'ति, इहापि न दोषो भवति। यदप्युच्यते[3] 'विप्रतिषिद्धेषु चानुपपत्ति'रिति। सर्वं एव हि[4] शब्दा विप्रति-

प्र.]नात्सामानाधिकरण्यमस्ति। विप्रतिषिद्धेषु चेति। येऽर्था अविरुद्धास्तेषां भवत्वेकैकेन शब्देनाऽभिधानम्, विरुद्धानां तु सहानवस्थानादयुगपदनुभवाऽभावात्सहविवक्षाऽभावाद्युगपद्वाचिता नोपपद्यत इत्यर्थः। आरात्पुरादीनां विरुद्धार्थाभिधानं दृष्ट्वा पृच्छति—किं कारणमिति। सुखप्रतिघातेनेति। पुरादयस्तु[4] युगपद्विरुद्धार्थाभिधायिनो नैवाभ्युपगम्यन्ते। दर्शनीया मातेति। वृत्तावेकार्थीभावेन[5] मात्रर्थवृत्तित्वाद्दर्शनीयाशब्दस्य सामानाधिकरण्यमत्रास्ति। अथ मतमिति। वृत्तौ सामानाधिकरण्यस्य व्यभिचाराऽभावाद्यदि वाक्यविषयं सामानाधिकरण्यमाश्रीयते तदा पट्वीमृद्व्यावित्यत्रापि न दोषः। लौकिकं च यद्वाक्यं प्रयोगार्हं तत्र सामानाधिकरण्यमाश्रीयते, न त्वलौकिके प्रक्रियावाक्ये पट्व्यौ च मृद्व्यौ चेति। विप्रतिषिद्धा इति। विप्रतिषिद्धार्था इत्यर्थः। परस्परपरिहारेण सर्वेषामर्थानां शब्दैरभिधानात्

उ.]प्रश्नानुपपत्तिरत आह—आरादिति। तच्च दूरसमीपयोर्वर्तते। पुरेति चिरातीतभविष्यदासन्नयोर्वर्तते। सुखप्रतिघातेनेत्यादिना सुखप्रतिबन्धिकायास्तन्नाशिकायाश्च सामग्र्या दुःखजनकत्वं, दुःखप्रतिबन्धिकायास्तन्नाशिकायाश्च सुखजनकत्वं सूचितम्। एवं दुःखसुखजनकसामग्र्योर्नियमेन सुखदुःखप्रतिबन्धकत्वादि च सूचितम्। एतेन भारोत्तीर्णे गौणः सुखव्यवहार इत्यपास्तम्। षष्ठीसमासे कथं सामानाधिकरण्यमत आह—वृत्ताविति। अयं भावः—सामानाधिकरण्यं नाम विशेष्यतयैकद्रव्योपस्थापकत्वम्। तच्चाऽत्रापि पृथक्पूर्वपदेन स्वार्थानुपस्थितेरिति न दोष इति। अनयैव रीत्या 'विरूपाणामपी'त्येकशेषोपि वारणीयः। द्वन्द्वारम्भसामर्थ्येन वाक्यीयस्य समानार्थत्वस्यैवाश्रयणादिति बोध्यम्। नन्वत्र पक्षे पट्वी चेत्येव वाक्यं समासार्थमिति तत्रापि सामानाधिकरण्यमस्त्येवेत्यत आह—लौकिकं चेति। स्वातन्त्र्येणार्थबोधाय प्रयुक्तमित्यर्थः। इदं त्वलौकिकवृत्तिसमानार्थकमेवेति भावः।शब्दानां स्वरूपतो विप्रतिषिद्धत्वाऽभावादाह—विप्रतिषिद्धार्था इति।तदयुपपादयति—परस्परेति। भाष्ये—निवर्तयतीति। 'बुद्धित' इति शेषः। ननु विप्रति-

१ 'षिद्धे चा'। २ क्वचिन्न। ३ 'यदुच्यते'। ४ 'आरादादयस्तु'। ५ 'भावान्मा'।

पिद्धाः। इहापि प्लक्षन्यग्रोधाविति, प्लक्षशब्दः प्रयुज्यमानः प्लक्षार्थं संप्रत्याययति, न्यग्रोधार्थं निवर्तयति। न्यग्रोधशब्दः प्रयुज्यमानो न्यग्रोधार्थं संप्रत्याययति, प्लक्षार्थं निवर्तयति। अथाऽत्र चेद्युक्ता युगपदधिकरणवचनता दृश्यते, इहापि युक्ता दृश्यताम्॥*॥शब्दपौर्वापर्यप्रयोगादर्थपौर्वापर्याभिधानम्॥*॥ शब्दपौर्वापर्यप्रयोगादर्थपौर्वापर्यमभिधानं प्राप्नोति॥ अतः किम्?॥ युगपदधिकरणवचनताया अनुपपत्तिः। प्लक्षन्यग्रोधा इति॥ यथैव हि शब्दानां पौर्वापर्यं तद्वदर्थानामपि भवितव्यम्॥*॥ शब्दपौर्वापर्यप्रयोगादर्थपौर्वापर्याभिधानमिति चेद्द्विवचनवहुवचनानुपपत्तिः॥*॥ शब्दपौर्वापर्यप्रयोगादर्थपौर्वापर्याभिधानमिति चेद्द्विवचनबहुवचनयोरनुपपत्तिः। प्लक्षन्यग्रोधौ प्लक्षन्यग्रोधा इति। प्लक्षशब्दः सार्थको[3] निवृत्तो, न्यग्रोधशब्द उपस्थितः। एकं एकार्थः, तस्यैकार्थत्वादेकवचनं प्राप्नोति॥*॥ विग्रहे च[4] युगपद्वचनं ज्ञापकं युगपद्वच-

प्र.]न्यग्रोधार्थमिति। एकस्मिन्नर्थेऽवगतेऽर्थादर्थान्तरस्य निवृत्तिः। इहापीति। विरुद्धानामप्यर्थानामेकशब्दाभिधेयताया अविरोधात्। तथा हि—यदा जन्ममरणयोर्विरुद्धयोरप्येकसंज्ञा सहसंप्रत्ययाय क्रियते तदा तच्छब्दवाच्यत्वं तयोर्भवत्येव। इदानीं युगपद्वाचिताया असंभवं प्रतिपादयति—एवमपीति। अभिधानक्रमादभिधेयक्रमोऽवतिष्ठते, यथा गुणवृद्धी वृद्धिगुणाविति। ततश्च शब्दक्रमात्क्रमवदर्थावगमान्न संभवत्येकैकेनाऽनेकस्याऽभिधानमित्यर्थः। न्यग्रोधशब्द इति। न्यग्रोधार्थप्रतिपत्तिकाले यदि प्लक्षार्थस्याऽनवगतिः स्यात्तदा न्यग्रोधशब्दादेकार्थत्वादेकवचनं स्यात्। तस्माद्द्विवचनवहुवचनाऽन्यथानुपपत्त्या प्लक्षन्यग्रोधावित्यादावेकैकोऽनेकार्थाभिधायीत्यभ्युपगन्तव्यम्। एवं युक्त्या युगपद्वाचितां प्रसाध्याऽऽगमेन प्रसाधयति—विग्रहे

उ.]तात्पर्यं[1] चेदपोहवादः। अपोहश्च तदितरभेदस्तद्वान्वा। न चेन्निवृत्तिर्दुर्लभेत्यत आह— एकस्मिन्निति। विरुद्धानामिति। नहि सहानुभवाऽसंभवः शब्दास्सहवोधे प्रतिवन्धक इति भावः। एका संज्ञेति। एको वाचकः शब्द इत्यर्थः। ननु वाचः[5] क्रमो न वाच्यप्रतीतियौगपद्यविरोधीत्यत आह—अभिधानक्रमेति। अभिधेयक्रमः—अभिधेयज्ञानक्रमः। क्रमवदर्थावगमादिति। क्रमवतोऽर्थावगमस्य सत्त्वादित्यर्थः। भाष्ये[2]—प्लक्षशब्दः सार्थको निवृत्त इति। अर्थेन सह निवृत्त इत्यर्थः। स्वार्थे कः। ननु तस्य निवृत्तावपि एकेन शब्देन समासरूपप्रातिपदिकेन द्वौ वोधिताविति द्विवचनं भविष्यतीति चेन्न; समासस्य समूहे शक्तावपि प्लक्षादीनामवयवत एव बोधेन एकप्रातिपदिकजन्यवोधविषयत्वाऽभाव इत्यभिमानात्। तस्मादिति। विनिगमनाविरहादुभयोरप्यनेकार्थत्वमित्याशयः। आगमेन—अनाशङ्कनीयप्रमादवेदवाक्येन। एतेन 'द्यावे'त्यादावपि द्वि-

१ क्वचिन्न। २ भाष्यमित्यन्ये। ३ 'सार्थोनिवृत्तो'। ४ चः क्वचिन्न। ५ 'वाचकक्रमो'।

नस्य ॥*॥ विग्रहे खल्वपि युगपद्वचनता दृश्यते—'द्यावा ह[1] क्षामा' 'द्या चिदस्मै पृथिवी संनमेते[2]' इति ॥ किमेतत् ? ॥ युगपदधिकरणवचनताया उपोद्वलकम् । विग्रहे किल नाम युगपदधिकरणवचनता स्यात्, किं पुनः समासे ॥*॥ समुदायात्सिद्धम् ॥*॥ समुदायात्सिद्धमेतत् । किमेतत्समुदायात्सिद्धमिति?॥ 'द्विवचनबहुवचनताप्रसिद्धि[3]'रिति चोदितं तस्यायं परिहारः ॥*॥ समुदायात्सिद्धमिति[4] चेन्नैकार्थत्वात्समुदायस्य ॥*॥ समुदायात्सिद्धमिति चेत् । तन्न ॥ किं कारणम् ? ॥ 'एकार्थत्वात्समुदायस्य' । एकार्था हि समु-

---

प्र.]चेति। द्यावेति। 'द्यो'शब्दो।द्यावापृथिव्योर्वर्तत इति ततः परस्य प्रथमाद्विवचनस्य 'सुपां सुलु'गित्याकारः 'गोतो णि'दिति गोशब्दस्यौकारान्तत्वोपलक्षणत्वाण्णित्वाद्वृद्धिरावादेशश्च । एवं पृथिवीशब्दो दिवस्पृथिव्यौ[6] वक्तीति प्रथमाद्विवचने 'वा छन्दसी'ति पूर्वसवर्णदीर्घः । 'सन्नमेते' इति द्विवचनान्तेन सामानाधिकरण्यात्पृथिवी इतीति पदकारैर्द्विवचनाश्रयप्रगृह्यसंज्ञानिवन्धस्य प्रकृतिभावस्य विधानाच्च द्व्यर्थत्वं पृथिवीशब्दस्याऽवसीयते । किमेतदिति । यथोक्तमप्रतिपद्य पृच्छति। उपोद्वलकमिति। 'उत्कृष्टवलकमुद्वलकं—'प्रत्यक्षं, तत्समीपमनुमानमुपोद्वलकम् । आगमस्येहानुमानत्वेनोपन्यासात् । विग्रहे किलेति । साहचर्यादिनिमित्ताश्रयेण वाक्येपि शब्दानामनेकार्थाभिधायित्वं यदा दृश्यते तदा समासे शब्दान्तराणां वाक्येऽदृष्टानामपि दर्शनादसंभावना न कार्येत्यर्थः । युगपद्वाचित्वाऽभावे द्विवचनबहुवचनाऽसिद्धिदोषं परिहर्तुमाह—समुदायादिति । द्वन्द्वेन समुदायरूपे-

---

उ.]वचनाऽनुपपत्तेस्तुल्यत्वात्पूर्वस्मात्को विशेष इत्यपास्तम् । भाष्ये—द्यावा हेति । 'द्यावा ह क्षामा प्रथमे ऋतेने'ति मन्त्रस्थमिदं । 'ह' शब्दोऽसमासद्योतकः । इतरेतरापेक्षयोभयत्रापि द्विवचनम् । प्रथमे 'ह'शब्देन द्वितीये 'चिदस्मै'शब्देन व्यवधानात्समासाऽभावः । प्रधाने—द्यावापृथिव्यावित्याद्यमन्त्रार्थे । यथोक्तं—सूचितं कैमुतिकन्यायम् । उत्कृष्टेति । एवं च युगपदधिकरणवचनतायाः सत्त्वसंदेहेऽनुमानम्—अनुमापकमित्यर्थः। साहचर्यादिति। 'द्यावाहक्षामे'तिवाक्ये परस्परसाहचर्यात् 'द्यावाचिदस्मै पृथिवी'त्यत्र साहचर्येण द्विवचनानुपपत्त्या च तथा कल्पनं श्रीयते चेत्किं समासे वक्तव्यमित्यर्थः । द्वन्द्वेनेति । द्वन्द्वरूपसमुदायेनोद्भूतावयवभेदः समूहरूपोऽर्थः प्लक्षादिशब्दक्रमोच्चारणेन यद्यपि क्रमेण बुध्यते, तथापि द्वन्द्वरूपैकप्रातिपदिकजन्यवोधविषयतायां द्वयोः सत्त्वेन द्विवचनाद्युपपत्तौ युगपद्वचने मानाऽभाव इति भावः । एवं खण्डनवादी स्वमते द्विवचनादिकमुपपाद्य युगपदधिकरणवचनतावादं दूषयितुं तन्मतमनुवदति—प्लक्षोपि द्व्यर्थो न्यग्रोधोपि द्व्यर्थः

---

१ 'हः' क्वचिन्न । २ 'नमेते' । ३ 'वचनाऽप्र' । ४ 'समुदायत्वात्सिद्ध' । ५ क्वचिन्न । ६ 'दिवः पृथि' ।

दाया भवन्ति । तद्यथा—'शतं यूथं वनमिति ॥*॥ नैकार्थ्यम् ॥*॥ नाऽयमेकोर्थः ॥ किं तर्हि ? ॥ द्व्यर्थो बह्वर्थश्च । प्लक्षोऽपि द्व्यर्थो न्यग्रोधोपि द्व्यर्थः । यदि तर्हि प्लक्षोपि द्व्यर्थो, न्यग्रोधोपि द्व्यर्थः—॥*॥ तयोरनेकार्थत्वाद्बहुवचनप्रसङ्गः ॥*॥ तयोरनेकार्थत्वाद्बहुषु बहुवचनमिति बहुवचनं प्राप्नोति ॥ ॥*॥ तयोरनेकार्थत्वाद्बहुवचनप्रसङ्ग इति चेन्न बहुत्वाऽभावात् ॥*॥ तयोरनेकार्थत्वाद्बहुवचनप्रसङ्ग इति चेतन्न ॥ किं कारणम् ? ॥ 'बहुत्वाऽभावात्' । नात्र बहुत्वमस्ति ॥ किमुच्यते—'बहुत्वाभावा'दिति, यदेदानीमेवोक्तं—'प्लक्षोपि द्व्यर्थो न्यग्रोधोपि द्व्यर्थ' इति ? । याभ्यामेवात्रैको द्व्यर्थस्ताभ्यामेवाऽपरोपि ॥ यद्येवम् ॥*॥ अन्यवाचकेनाऽन्यस्य वचनानुपपत्तिः ॥*॥ अन्यवाचकेन शब्देनाऽन्यस्य वचनं नोपपद्यते ॥ [ यथा प्लक्षेण न्यग्रोधार्थः ] ॥

॥*॥ अन्यवाचकेनाऽन्यस्य वचनानुपपत्तिरिति चेत्प्लक्षस्य न्यग्रोधत्वान्न्यग्रोधस्य [ च ] प्लक्षत्वात्स्वशब्देनाभिधानम् ॥*॥ अन्यवाचके[न शब्दे ] नान्यस्य वचनानुपपत्तिरिति चेदेवमुच्यते, तन्न ॥ किं कारणम् ? ॥

प्र.]र्थोऽभिधीयत इति द्विवचनबहुवचनप्रसिद्धिः । नैकार्थ्यमिति । उद्भूतावयवभेदः समुदायोऽभिधेयो न तु तिरोहितावयवभेद इत्यर्थः । बहुवचनप्रसङ्ग इति । एकैकेन युगपदनेकस्याऽर्थस्याऽभिधानात् । याभ्यामेवेति । नाऽत्र चत्वारोऽर्थाः ?, किं तर्हि ? द्वावेवार्थावित्यर्थः । अन्यवाचकेनेति । लौकिकाप्रयोगाच्छब्दानामर्थावधारणं, तत्र यथा 'पट'शब्दः घटार्थं न प्रत्याययति तथा प्लक्षन्यग्रोधशब्दौ परस्परार्थस्य प्रत्यायकौ न युक्तावित्यर्थः । प्लक्षस्येति । प्लक्षशब्दस्य न्यग्रोधार्थत्वान्न्यग्रोधशब्दस्य प्लक्षार्थाभिधायित्वात्स्वार्थ-

उ.]इति । 'इति तव मत'मिति शेषः। यदि तर्हीति । यद्येवं स्वीकुरुषे इत्यर्थः । यत्तु लघुविवरणे—"प्लक्षः—प्लक्षशब्दघटितो द्वन्द्वरूपः समुदाय इत्यर्थः।द्व्यर्थः—द्व्यवयवसमुदायार्थः । एवं न्यग्रोधोपीत्यपि व्याख्येय"मिति । तन्न । 'न्यग्रोधोपी'-त्यंशस्य वैयर्थ्यापत्तेः यदि तर्हीत्यादेरनुत्थानापत्तेश्च । न च प्रागुक्ताशयमविदुषो युगपद्वचनतावादिनोऽयं पूर्वपक्ष इति वाच्यं, तत्समाधानकाले पूर्वोक्तस्वाशयप्रकटनेनैव समानधानस्योचितत्वेन 'याभ्यामेवात्रैको द्व्यर्थस्ताभ्यामेवापरोऽपी'त्यादि तत्समाधानपरग्रन्थाऽसङ्गतेः। तद्ग्रन्थस्वारस्येन युगपदधिकरणवचनतावादिन एवैतत्पूर्वपक्षे सिद्धान्तित्वप्रतीतेः । ननु प्लक्षन्यग्रोधयोरुभयार्थत्वमिति वदतोऽन्यवाचकत्वमसिद्धमत आह—लौकिकादिति । नन्वस्याऽन्यरूपत्वाऽभावेन प्लक्षस्य न्यग्रोधत्वादित्यनुपपन्नमत आह—प्लक्षशब्दस्येति । भाष्ये 'प्लक्ष'शब्दस्य न्यग्रोधार्थत्वं

१ 'यूथं शतं' । २ 'मेकोऽर्थः' । ३ इदं भाष्यमित्यन्ये ।
४ 'बहुवचनम्' । ५ क्वचिन्न । ६ 'पट' । 'घट' ।

[ 'प्लक्षस्य न्यग्रोधत्वान्न्यग्रोधस्य च प्लक्षत्वात्स्वशब्देनाऽभिधानम्' । ];
प्लक्षस्य न्यग्रोधत्वान्न्यग्रोधस्य [च] प्लक्षत्वाच्च स्वशब्देनाभिधानं भविष्यति।
प्लक्षोपि न्यग्रोधो न्यग्रोधोपि प्लक्षः ॥ कथं पुनः प्लक्षोपि न्यग्रोधो न्यग्रोधोऽपि
प्लक्षः स्याद्यावता—"कारणाद्द्रव्ये शब्दनिवेशः" ?॥*॥ कारणाद्द्रव्ये शब्दनिवेश
इति चेत्तुल्यकारणत्वात्सिद्धम् ॥*॥ कारणाद्द्रव्ये शब्दनिवेश इति चेदे
मुच्यते, तन्न । 'तुल्यकारणत्वात्सिद्धम्' । तुल्यं हि कारणम् । यदि तावत्
क्षरतीति प्लक्षः स्यान्न्यग्रोधेप्येतद्भवति । तथा यदि न्यग्रोहतीति न्यग्रोधः
प्लक्षेप्येतद्भवति ॥*॥ दर्शनं वै हेतुः ॥*॥ न च न्यग्रोधे प्लक्षशब्दो दृश्यते
॥*॥ दर्शनं हेतुरिति चेत्तुल्यम् ॥*॥ दर्शनं हेतुरिति चेत्तुल्यमेतद्भवति।
प्लक्षेपि न्यग्रोधशब्दो दृश्यतां [ न्यग्रोधेपि प्लक्षशब्दः ] । तुल्यं हि कारणम्।
न वै लोके एष संप्रत्ययो भवति । न हि 'प्लक्ष आनीयता'मित्युक्ते न्यग्रोध
आनीयते ॥*॥ तद्विषयं च ॥*॥ तद्विषयं चैतद्द्रष्टव्यं प्लक्षस्य न्यग्रोधत्वम्।
किं विषयम् ?॥ द्वन्द्वविषयम्॥ युक्तं पुनर्यन्नियतविषया नाम शब्दाः स्युः।

प्र.]स्यैवाभिधानेन 'नास्त्यर्थान्तराभिधायित्वम्। लोकप्रसिद्ध्या त्वर्थान्तराभिधायित्व-मुच्यते । वृत्तिविषये त्वेकैकस्य द्वावर्थाविति स्वार्थावेव तौ भवतः । प्लक्षोऽपि न्यग्रोध इति । न्यग्रोधशब्दवाच्य इत्यर्थः । एवं न्यग्रोधोऽपि प्लक्षशब्दवाच्य इत्यर्थः । कारणादिति । शब्दार्थावसायहेतुर्लोकव्यवहारोऽत्र 'कारण'शब्देन विवक्षितः । न च लोकव्यवहारे प्लक्षशब्दस्य न्यग्रोधाभिधायित्वं प्रतीतम्। इतरः शब्दप्रवृत्तिनिमित्तं शब्दप्रयोगस्य कारणमिति मत्वाह—कारणादिति प्रक्षरणं—विस्तारेणाऽवस्थानम् । न्यग्रोहणम्—अधःशाखावस्थापनम् । इतरः स्वाभिप्रायं प्रकाशयति—दर्शनमिति । लोकव्यवहार इत्यर्थः। प्लक्षेऽपीति । लोके व्यवहारे 'प्लक्षन्यग्रोधौ दृश्येता'मित्युभयोः क्रियान्वयाद्द्विवचनदर्शनाच्च। तुल्यं हीति तुल्यो लोकव्यवहार इत्यर्थः । तद्विषयं चेति । द्वन्द्वावयवानामेवानेकार्थाभिधायित्वं न केवलानामित्यर्थः । युक्तं पुनरिति । किं युक्तमेतदित्यर्थः । बाढमिति

उ.]कथमिति प्रश्नोपपादकं—यावतेति । यत इत्यर्थः । तद्व्याचष्टे—शब्दार्थावसायेति । शब्दार्थसंबन्धग्रहणेत्यर्थः । 'प्लक्षेपि न्यग्रोधशब्दो दृश्यत' इत्युक्तं, तद्दर्शनमुपपादयति—लोकव्यवहारे प्लक्षेति । पूर्वोक्तेन शब्दप्रयोगक्रमेणाऽर्थक्रमादुभयोः क्रियान्वयो द्विवचनं च न स्यादित्यभिमानः। भाष्ये—तुल्यं हि कारणमिति । दर्शनरूपं कारणमपि तुल्यमित्यर्थस्तदाह—तुल्यो लोकेति । पुनराशङ्कते—न वै लोक इति । किं युक्तमेतदिति । युक्तं पुनरित्यत्र काक्वा प्र

१ लुप्तं स्यात् । २ 'स्ववाचकेन शब्देना' । ३ 'भवति' । ४ 'एतद्'
५ 'तीति व्युत्पत्त्या' । ६ 'धोऽप्ये' । ७ 'प्लक्षोऽप्ये' । ८ इदं भाष्यमित्यन्ये
९ 'दृश्यते' । १० क्वचिन्न । ११ 'पुनर्नियत' । १२ 'स्वार्थाभिधानान्नास्त्य

बाढं युक्तम् ॥*॥ अन्यत्रापि तद्विषयदर्शनात् ॥*॥ अन्यत्रापि हि नियतविषयाः शब्दा दृश्यन्ते । तद्यथा—समाने रक्ते वर्णे गौर्लोहित इति भवति, अश्वः शोण इति । समाने च काले वर्णे गौः कृष्ण इति भवति, अश्वो हेम इति । समाने च शुक्ले वर्णे गौः श्वेत इति भवति, अश्वः कर्क इति ॥ यदि तर्हि प्लक्षोपि न्यग्रोधो, न्यग्रोधोपि प्लक्षः—॥*॥एकेनोक्तत्वादपरस्य प्रयोगोऽनुपपन्नः ॥*॥ एकेनोक्तत्वात्तस्याऽर्थस्याऽपरस्य प्रयोगो नोपपद्यते, प्लक्षेण न्यग्रोधस्य न्यग्रोधप्रयोगः ॥*॥ एकेनोक्तत्वादपरस्य प्रयोगोनुपपन्न इति चेदनुक्तत्वात्प्लक्षेण न्यग्रोधस्य न्यग्रोधप्रयोगः ॥*॥ एकेनोक्तत्वादपरस्य प्रयोगोनुपपन्न इति चेत् । तन्न ॥ किं कारणम् ? ॥ 'अनुक्तत्वात्प्लक्षेण न्यग्रोधस्य न्यग्रोधप्रयोगः' । अनुक्तः प्लक्षेण न्यग्रोधाऽर्थ इति कृत्वा न्यग्रोधशब्दः प्रयुज्यते ॥ कथमनुक्तो, यावतेदानीमेवोक्तं–'प्लक्षोपि न्यग्रोधो न्यग्रोधोपि प्लक्ष' इति ?॥ सहभूतावेतावन्योन्यस्यार्थमाहतुर्न पृथग्भूतौ ॥ किं पुनः कारणं सहभूतावेतावन्योन्यस्यार्थमाहतुर्न पृथग्भूतौ ? ॥*॥अभिधानं पुनः स्वाभाविकम् ॥*॥ स्वाभाविकमभिधानम् ॥ अथ वेह कौ चित्प्राथमकल्पिकौ प्लक्षन्यग्रोधौ, कौ चित्क्रियया वा गुणेन वा, प्लक्ष इवायं प्लक्षो न्यग्रोध इवायं न्यग्रोध इति ।

प्र.]भिन्नरूपत्वाद्भिन्नशक्तित्वाच्च। अश्वः शोण इति । यथाऽश्वादन्यत्र शोणादयो न वर्तन्ते तथा विना द्वन्द्वात्प्लक्षादयो न्यग्रोधाद्यर्था न भवन्तीत्यर्थः । यदि तर्हीति । ननु 'तद्विषयं चे'त्युक्ते कोऽस्य दोषस्याऽवसरः? । एवं मन्यते–परस्परसन्निधानेन यदा द्वयोरपि सामर्थ्यमाहितं तदाऽन्यतरविगमेपि सामर्थ्यहानाभावो,यथा वह्निसंपादितपाकजरूपादिसद्भावो निवृत्तेऽपि वह्नौ । अनुक्त इति । न्यग्रोधशब्दप्रयोगमन्तरेणेत्यर्थः । उक्तं ह्येतत्–द्वन्द्वावयवानामेवाऽनेकार्थाभिधायित्वं न केवलानां, यथा वह्निसंनिधावेव ताम्रं द्रवरूपं भवति न तु तद्विनिवृत्तौ । सहभूताविति । मारोचन्तृवत्परस्परशक्त्याविर्भावात् । प्राथमकल्पिकाविति । लोकव्यवहारे पदोच्चारणमात्रात्तदर्थावसायान्मुख्यावित्यर्थः । कौ चिदिति । तत्सहचरितगुणक्रिया·

उ.]व्यङ्ग्य इति भावः। भिन्नरूपत्वादिति । 'प्लक्षो दृश्यता'मित्यादौ सविभक्तिकं, समासे निर्विभक्तिकमित्यर्थः । भिन्नशक्तित्वादिति । तत्र भिन्नोपस्थितिजनिका शक्तिः, समासे एकोपस्थितिजनिका सेत्यर्थः । भाष्ये–प्लक्षेण न्यग्रोधप्रयोग इति । प्लक्षशब्देन न्यग्रोधरूपार्थस्योक्तत्वान्न्यग्रोधशब्दप्रयोगो नोपपद्यत इत्यर्थः । युगपदभिधानमनुक्तिश्च विरुद्धेत्यत आह–न्यग्रोधशब्देति । भारोद्वन्निति । इतरसन्निधाने एव शक्त्याविर्भावो न केवलस्यापीति भावः । 'किमिमौ प्लक्षावेवे'ति

१ क्वचिन्न । २ इदं भाष्यमित्यन्ये ।

तत्र प्लक्षावित्युक्ते सन्देहः स्यात्—किमिमौ[1] प्लक्षावेव [ आहोस्विन्न्यग्रोधा- वेव ] आहोस्वित्प्लक्षन्यग्रोधाविति । तत्राऽसन्देहार्थं न्यग्रोधशब्दः प्रयुज्यते इयं युगपदधिकरणवचनता नाम दुःखा च दुरुपपादा च । यच्चाप्यत्र निबन्धनमुक्तं—द्यावा ह[3] क्षामेति, तदपि च्छान्दसम् । तत्र[2] सुपां सुपो भवन्तीत्येव सिद्धम् । सूत्रं च भिद्यते ॥ यथान्यासमेवास्तु ॥ ननु चोक्तं- 'चार्थे द्वन्द्ववचनेऽसमासेऽपि चार्थसंप्रत्ययादनिष्टप्रसङ्गः' इति ॥ नैष दोषः । इह 'चे द्वन्द्व' इतीयता सिद्धम् ॥ कथं पुनश्चे नाम वृत्तिः स्यात् । शब्दे ह्येषः ? ॥ शब्दे कार्याऽसंभवादर्थे कार्यं विज्ञास्यते । सोऽयमेवं सिद्धे सति यदर्थग्रहणं करोति तस्यैतत्प्रयोजनम्—एवं यथा विज्ञायेत—चेन कृतोऽर्थश्चार्थः

प्र.]दर्शनात्तद्रूपारोपणाद्गौणावित्यर्थः । यथोक्तम्—यदि प्रक्षरतीत्यादि । सन्देहः स्यादिति । उपक्रमे सन्देहो गौणस्याप्यर्थस्य संभवमात्रेण । न तु मुख्यार्थसंनिधौ गौणस्य परामर्श एवास्ति तत्कृतः सन्देहः । भाष्यकारः सूत्रन्यासं स्थापयितुमाह इयमिति । दुःखेति । प्रतीतावनुपारोहात् । दुरुपपादेति । प्रमाणाऽभावात् वृद्धव्यवहाराद्धि शब्दार्थावसायः । न च तत्र प्लक्षशब्दस्य प्लक्षन्यग्रोधाभिधानं दृश्यते । न च गौणार्थत्वं प्लक्षशब्दस्य, न्यग्रोधशब्देनैव न्यग्रोधस्य प्रतिपादितत्वात् । न च प्लक्षन्यग्रोधावित्युक्तेऽर्थद्वयप्रतीतेरावृत्तिः—यथा प्लक्षन्यग्रोधौ प्लक्षन्यग्रोधाविति । समासस्य चानेकार्थाभिधायित्वात्ततः परयोर्द्विवचनबहुवचनयो- रुपपत्तिरिति द्विवचनबहुवचनाऽन्यथानुपपत्त्याऽपि नास्ति युगपद्वाचिताप्रतिपत्तिः । लिङ्गदर्शनमपि निराकुर्वन्नाह—यच्चापीति । एकवचनस्य स्थाने द्विवचनमित्यर्थः । चेन कृतोऽर्थ इति । अर्थशब्दस्य सन्निधानादुत्तरपदलोपी समास आश्रीयत इति

उ.]भाष्यस्य—मुख्यौ प्लक्षावित्यर्थः। तत्कृत इति। तस्मान्न्यग्रोधप्रतीतिरेव न स्या- दतो न्यग्रोधशब्दप्रयोग आवश्यक इति बोध्यम् । गौणस्याप्यस्य प्लक्षन्यग्रोधावि- त्यादौ लोकव्यवहारे परस्य प्रसिद्धत्वान्मुख्यसमकक्षतया भाष्ये सन्देह उक्त इत्यन्ये । प्रतीताविति । समुदायेन द्वयोरुपस्थितिरित्येवाऽनुभवो न तु प्रत्येकं द्व्यर्थताऽनुभव इत्यर्थः । समासस्य चानेकार्थेति । अनेकार्थबोधकत्वादित्यर्थः । उद्भूतावयवभेदसमुदायाभिधानशक्तिरुभयोः पर्याप्ता क्रमप्रयोगवद्भिरपि पदैः क्रमेणैकैव बुद्धिः समूहालम्बनज्ञानवदिति भावः । द्विवचनमित्यर्थ इति । अत एव पृथिवीत्यस्य प्रगृह्यत्वोपपत्तिरिति भावः । द्वितीयबोधस्तु एकत्र क्षामापदेन, अपरत्र द्यावापदेन । अत एव 'सन्नमेते' इति द्विवचनोपपत्तिः; 'देवदत्तश्च यज्ञदत्तश्च

1 'किमेतौ' । २ क्वचिन्न । ३ 'धावेव' । ४ 'सेयं' । ५ 'एतद' । ६ क्वचि- क्वचिन्न । ७ 'शब्देऽसं' । 'कार्यस्याऽसं' । ८ 'कृतेऽर्थे चार्थे' ।

इति ॥ कः पुनश्चेन कृतोऽर्थः ? ॥ समुच्चयोऽन्वाचय इतरेतरयोगः समाहार इति ॥ समुच्चय[1]ः–प्लक्षश्चेत्युक्ते गम्यते एतत् [न्य[2]ग्रोधश्चेति, तथा 'न्यग्रोधश्चे'त्युक्ते गम्यते एतत्–प्लक्षश्चेति ] ॥ अन्वा[3]चयः–'प्लक्षश्चे'त्युक्ते गम्यते एतत्–'सापेक्षोयं प्रयुज्यते' इति ॥ इतरेतर[4]योगः–'प्लक्षश्च न्य[5]ग्रोधश्चे'त्युक्ते गम्यते एतत्–'प्लक्षोपि न्यग्रोधसहायो,न्यग्रोधोपि प्लक्षसहायः' इति॥[प्ल[6]क्षश्च

प्र.]र्थः।ननु चेनार्थस्य कृतत्वमुत्पादनं वा स्यात् प्रकाशनं वा। तत्रोत्पादनं तावन्नोपद्यते, नहि शब्दैरर्था उत्पाद्यन्ते। यथोक्तं—'नहि शब्दकृतेन नामार्थेन भवितव्य'मिति । अथ प्रकाशनं, तदा स एवातिप्रसङ्ग इति मत्वा पृच्छति—कः पुनरिति । समुच्चय इति। यदा परस्परनिरपेक्षाः पदार्थाः क्रियायां समुच्चीयन्ते तदा समुच्चयश्चार्थो यथा–'गामश्वं पुरुष'मित्यादौ । वाक्ये परस्परानपेक्षा गवादयो नयनक्रियया संबध्यन्ते।तत्र चेन कृतोर्थ इत्यवधारणमर्थग्रहणसामर्थ्यादाश्रीयते–चेनैव यः प्रकाशितोऽर्थस्तत्र द्वन्द्वः । 'गामश्व'मित्यत्र तु विनाऽपि चेन समुच्चयावगमान्नासौ चेनैव प्रकाशित इत्युच्यते । सामर्थ्यं ह्येकक्रियाद्वारकं दध्योदनादिवत्स्यादिति नात्राऽसामर्थ्यात्समासपरिहारो वाच्यः। प्लक्षश्चेत्युक्त इति। 'न्यग्रोधो दृश्यता'मित्युपक्रम्य यदा प्लक्षश्चेत्युच्यते तदा न्यग्रोधश्चेति गम्यते । यदा त्वेकस्य प्राधान्यं तदा इतरस्य तदनुरोधेन क्रियासंबन्धाद्भिन्नकक्ष्यतया नास्ति परस्परेण सामर्थ्यमिति अन्वाचये समासाऽभावः । प्रधानाभिधायि पदं चाऽर्थे न वर्ततेऽपि त्वप्रधानमेवेति

उ.] तिष्ठत' इतिवत् । परस्परनिरपेक्षा इति । 'न्यग्रोधश्छिद्यतां, प्लक्षश्चे'त्युक्ते न्यग्रोधस्य च्छेदनान्वये प्लक्षापेक्षाया अभावमात्रेण परस्परनिरपेक्षत्वमित्यर्थः । नन्वेतावतोक्तेऽहरहर्नयमान इत्यादौ कथं समासप्रसङ्गो वारितोऽत आह–तत्र चेनेति । चेनाप्यचेनापीति । चं विनापीत्यर्थः । क्वचित्तु 'विनापि चेने'त्येव पाठः । ननु समुच्चयेऽसामर्थ्यात्कथं समासप्राप्तिरत आह–सामर्थ्यं हीति । इदं तु चिन्त्यम् । 'कृतः सर्वो मृत्तिकये'त्यादौ समासापत्तेः । किं च क्रियाद्वारके सामर्थ्ये दध्योदनादाविव सामर्थ्यस्य द्वारभूतक्रियायाः पृथक्प्रयोगाऽनापत्तिः । किं चैवं सति सूत्रस्थचार्थपदविग्रहमुक्त्वा पुनस्तदर्थप्रश्ने समुच्चयोल्लेखाऽसङ्गतिः, एवगर्भार्थेन सौत्रेण तदप्रतीतेः । किं च 'गामश्वं पुरुषं पशु'मित्यत्र सर्वत्र नैरपेक्ष्ये समुच्चयोऽपि कथं, समुच्चये एकत्र सापेक्षत्वात् । भाष्ये–प्लक्षश्चेत्युक्ते इति । 'न्यग्रोधो दृश्यता'मित्युपक्रमोक्तौ तु न प्लक्षश्चेति गम्यत इति भावः । न्यग्रोधश्चेत्युक्ते इति । 'प्लक्षो दृश्यता'मित्युपक्रम्य न्यग्रोधश्चेत्युक्ते इत्यर्थः । अन्वाचये सत्लोपश्चेत्युक्ते इति पाठः। सापेक्षोयमिति । प्रधानीभूतक्रिययेत्यर्थः ।

१'समुच्चये'।२क्वचिन्न।३'चये'।४'योगे'।५'न्यग्रोधावित्युक्ते'। ६'चेनाऽप्यचेनाऽपि'।

न्यग्रोधश्चेत्युक्ते] समाहारेऽपि क्रियते–प्लक्षन्यग्रोधमिति ॥ तत्रायमर्थो...

प्र.]अनेकस्य पदस्य चार्थवृत्तित्वाऽभावाद्द्वन्द्वाऽभावः।इतरेतरयोगः परस्परापेक्षा... नेकेषामेकस्मिन्नर्थे समन्वये सति भवतीति परस्परसहितता चशब्देनैव द्यो... इति तत्र समासो भवति । समाहारेपीति । तत्रापि परस्परसहितताऽवगम...

उ.]तदाह—यदा त्विति । इतरस्येत्यस्य तदेत्यादिः। भिन्नकक्षतया–भिन्नान्वयितया । तत्रैव सामर्थ्याऽभावे युक्त्यन्तरमाह–अनेकस्य पदस्येति।इदं समुच्चयेपि बोध्यम् । एवं च समुच्चयेप्यनेकस्य चार्थवृत्तित्वाऽभावात्समासपरिहार... प्रागुक्तमसङ्गतमेवेति बोध्यम् । परस्परापेक्षाणामिति । एतेन व्यपेक्षासामर्थ्ये द्वन्द्वेऽनुपपत्तिरित्यपास्तम् । परस्परान्वयित्ववदितरान्वये परस्परापेक्षत्व... व्यपेक्षात्वात्। सा च प्रकृतेस्त्येवेति भावः।एतद्विपर्ययश्च समुच्चयादौ दर्शित ए... परस्परापेक्षाणामित्यनेन समुच्चयाद्वैलक्षण्यमुक्तम् । अत एव भाष्ये–'प्लक्षं... गम्यत एतन्न्यग्रोधश्चे'ति समुच्चयस्याकारः प्रदर्शितः । तेन ह्येकः परसाहित्य... क्षते न पर इतरसाहित्यमित्युक्तम्। अपि चाऽनेन समुच्चये साहित्यं विशेषणी... क्तम् । न्यग्रोधसहितः प्लक्ष इति हि तदर्थः । अतोऽपि तत्र न समासः । चार्थ... प्राधान्ये एवैतत्समासप्रवृत्तेः । इतरेतरयोगस्य—'प्लक्षश्च न्यग्रोधश्चेत्युक्ते प... एतत्, प्लक्षोपि न्यग्रोधसहायो न्यग्रोधोपि प्लक्षसहाय' इत्याकारः प्रदर्शि... अनेनोद्भूतावयवभेदसाहित्यस्य विशेष्यतेति दर्शितम् । एवं च समुच्चयान्वाच... श्चकारो द्योतकः, अन्त्ययोस्तु वाचकः, तत्र तदर्थस्य विशेष्यत्वादिति बोध्य... तस्माद्ग्रामश्वमित्यादौ न समुच्चयः । विनिगमनाविरहेण सर्वेषां परस्परसाहित्य... गतेः, अहरहःशब्देन तथैव प्रतीतेः । चार्थसाहित्यावगतिसद्भावेन समासप्र... शङ्का । उत्तरं तु–चशब्देन साहित्यं वाक्ये यत्र प्राधान्येन भासते, वृत्तौ चा... च समासेन, तत्र समासशास्त्रप्रवृत्तिः । चकृतार्थे वर्त्तमानाऽनेकसुबन्तस... 'गामश्व'मित्यादौ तु अहरहःशब्देन साहित्यं गम्यते, न तु चेनेति भाष्या... समुच्चयेऽपि शब्दबोधे एकत्रैव साहित्यं बुध्यते,एकोत्तरं चप्रयोगादित्यनेकसुबन्... प्रधानभूतचार्थे वृत्त्यभावात्समासाऽभाव इत्ययमर्थश्च भगवता समुच्चयान्वाच... रूपनिरूपणेनैव दर्शितः । अत एव सन्नियोगशिष्टपरिभाषापि न्यायसिद्धेति ... तात्पर्यम् । 'इन्द्रस्त्वष्टा वरुण' इत्यादावपि परस्परसाहित्येनैव लोकपाल... बुध्यत इति बोध्यम् । तत्रापीति । परं त्वनुद्भूतावयवभेदमिति भावः । ... समाहारेऽपीति पृथग्वाक्यम् । अत्र 'प्लक्षोपि न्यग्रोधसहाय' इत्यादावुक्ते... अनुद्भूतावयवभेदसाहित्यावगतिरिति विशेषः । अनुद्भूतावयवभेदमेव ... समाहारशब्देनोच्यते । तदाह–क्रियत इति । 'द्वन्द्व' इति शेषः । ...

१ क्वचिन्न । २ 'तत्रायमर्थो' । ३ 'प्रतीतिः' । ४ 'चयोगा' । ५ ...

द्वन्द्वैकवद्भावो न पठितव्यो भवति । समाहारैकत्वादेव सिद्धम् ॥

एकादश द्वादशेति कोऽयं समासः ?॥*॥ एकादीनां दशादिभिर्द्वन्द्वः॥*॥ एकादीनां दशादिभिर्द्वन्द्वः समासः ॥*॥ एकादीनां दशादिभिर्द्वन्द्व इति चेद्विंशत्यादिषु वचनप्रसङ्गः ॥*॥ एकादीनां दशादिभिर्द्वन्द्व इति चेद्विंशत्यादिषु वचनं प्राप्नोति । एकविंशतिः । द्वाविंशतिः ॥*॥ सिद्धं त्वधिकान्ता सङ्ख्या सङ्ख्यया समानाधिकरणाधिकारेऽधिकलोपश्च ॥*॥ सिद्धमेतत् ॥ कथम् ? ॥ समानाधिकरणाधिकारे वक्तव्यम्—'अधिकान्ता सङ्ख्या सङ्ख्यया सह समस्यतेऽधिकशब्दस्य च लोपो भवती'ति । एकाधिका विंशतिः—एकविंशतिः, द्व्यधिका विंशतिः—द्वाविंशतिः ॥ यदि समानाधिकरणः—स्वरो न सिध्यति ॥ यद्धि तत्—'सङ्ख्या पूर्वपदं प्रकृतिस्वरं भवती'ति, 'द्वन्द्वे' इत्येवं तत् ॥ किं पुनः कारणं द्वन्द्व इत्येवं तत् ? ॥ इह मा भूत्—शतसहस्रमिति ॥ अस्तु तर्हि द्वन्द्वः ॥ ननु चोक्तम्—'एकादीनां दशादिभिर्द्वन्द्व इति चेद्विंशत्यादिषु वचनप्रसङ्गः' इति॥ नैष दोषः । सर्वो हि द्वन्द्वो विभाषैकवद्भवति ॥ यदा

प्र.]द्वन्द्वैकवद्भाव इति । युगपदधिकरणवचनतायां द्वन्द्वे तु वक्तव्यः स्यात् । एकैकस्याऽनेकार्थत्वात् । न च विषयविभागार्थोऽसौ वक्तव्यः, प्रयोगदर्शनाद्विषयविभागस्य सिद्धत्वात् । दशादिभिरिति । आदिशब्देन विंशत्यादयो गृह्यन्ते । विंशत्याद्यर्थ एव चायं विचारः । दशशब्देन तु द्वन्द्वे न कश्चिद्दोषः । वचनमिति । द्विवचनं बहुवचनं चेत्यर्थः । सिद्धं त्विति । शाकपार्थिवादित्वात् । शतसहस्रमिति षष्ठीसमासः । सर्वो हीति । 'तिष्यपुनर्वस्वो'रित्यत्र बहु-

उ.]प्रयोजनान्तरमाह—तत्रायमपीति।'द्वन्द्वैकवद्भाव' इति ग्रन्थेन पक्षान्तरे गौरवं प्रदर्श्यत इत्याह—युगपदिति । न च विषयेति । नियमार्थमित्यर्थः । वस्तुतो 'द्वन्द्वैकव'दित्यस्य सर्वो द्वन्द्वो विभाषयैकव'दिति वचनं न कार्यमित्येवार्थ इति न दोषः । न कश्चिद्दोष इति । एकादशादीनां नित्यबहुवचनान्तत्वादिति भावः । न केवला प्रकृतिरिति समयाद्वचनमिष्यत एवाऽत आह—द्विवचनमिति। उभयोः सङ्ख्यापरत्वे द्विवचनं सङ्ख्येयपरत्वे बहुवचनं प्राप्नोति,इष्यते त्वेकवचनमिति भावः। षष्ठीसमास इति । सहस्राणां शतमिति विग्रहः । 'सङ्ख्याया अल्पीयस्या' इति शतस्य पूर्वनिपातः । 'तदस्मिन्नधिक'मिति सूत्रे भाष्ये ध्वनितमेतत् । भाष्ये—अस्तु तर्हि द्वन्द्व' इत्यस्य—सोपीत्यर्थः।पूर्वंसिद्धन्त्विति वार्त्तिकोक्तेस्तदभावकल्पने मानाऽभावात् । तिष्यपुनर्वस्वोरिति । एकविंशत्यादावितरेतरयोगस्तु न, अनभिधानादिति बोध्यम् । द्वन्द्वतत्पुरुषाभ्यां स्वरभेदस्त्विष्यत एवेति केचित् । परे तु

१ भाष्यमिदमित्यन्ये । २ 'दीनां सहदशा' । ३ द्वन्द्वश्च स । ४ क्वचिन्न । ५ 'यदैतत्स' । 'यदि हि वा सङ्ख्या' । ६ 'षयैक'।

तर्ह्येकवचनं तदा नपुंसकलिङ्गं प्राप्नोति ॥ लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य ॥

## उपसर्जनं पूर्वम् ॥ २।२।३० ॥

किमर्थमिदमुच्यते ? ॥ ॥*॥ उपसर्जनस्य पूर्ववचनं परप्रयोगनिवृत्त्यर्थम्॥*॥उपसर्जनस्य पूर्ववचनं क्रियते । [ किं प्रयोजनम् ? ॥ 'परप्रयोगनिवृत्त्यर्थं' ] ॥ परप्रयोगो मा भूदिति ॥*॥ न वाऽनिष्टादर्शनात् ॥*॥ न वै तत्प्रयोजनमस्ति ॥ किं कारणम् ? ॥ 'अनिष्टाऽदर्शनात्' । न हि किंचिदनिष्टं दृश्यते । न हि कश्चिद्राजपुरुष इति प्रयोक्तव्ये पुरुषराज इति प्रयुङ्क्ते । यदि चाऽनिष्टं प्रसज्येत ततो यत्नार्हं स्यात् ॥ अथ यत्र द्वे षष्ठ्यन्ते भवतः कस्मात्तत्र प्रधानस्य पूर्वनिपातो न भवति । राज्ञः पुरुषस्य राजपुरुषस्येति ? ॥*॥ षष्ठ्यन्तयोः समासेऽर्थाभेदात्प्रधानस्यापूर्वनिपातः ॥*॥ षष्ठ्यन्तयोः समासेऽर्थाऽभेदात्प्रधानस्य पूर्वनिपातो न भविष्यति । एवं न चेदमकृतं भवति 'उपसर्जनं पूर्वं'मिति, अर्थश्चाऽभिन्न इति कृत्वा प्रधानस्य पूर्वनिपातो न भविष्यति ॥ [ उपसर्जनम्पूर्वम् ] ॥

प्र.]वचनग्रहणेनैतज्ज्ञापितम्।लिङ्गमशिष्यमिति।'सनपुंसक'मिति न कर्तव्यमित्यर्थः।

उपसर्जनम् । परप्रयोगनिवृत्त्यर्थमिति । वाक्यवत्समासे पदानामनियमे प्रयोगे प्राप्ते नियमार्थमेतदित्यर्थः । न वेति । नित्येषु शब्देषु प्रयोगसङ्करे शिष्टे गाव्यादिप्रयोगनिवारणायेदं शास्त्रम् । इह तु विपर्ययप्रयोगो नैव दृश्यत इति किं तन्निवृत्त्यर्थेन यत्नेनेत्यर्थः । इदानीमारब्धे सूत्रे दोषमुद्भावयति—अथ यत्रेति । राज्ञः पुरुषस्येति । द्वयोरपि 'षष्ठी'ति समासशास्त्रे प्रथमानिर्दिष्टत्वादुपसर्जनत्वे पूर्वनिपाताऽनियमप्रसङ्गः । अर्थाऽभेदादिति । उपसर्जनसंज्ञाऽन्वर्थत्वादप्रधानस्यैव भवति । पुरुषश्चात्र राजापेक्षया प्रधानमेवेति पुरुषार्थो न ।भिद्यते राजापेक्षया न व्यतिरिच्यत इत्यर्थः । न चेदमिति । अबुधभ्रान्तिनिराकरणायाऽऽश्रितमेवेत्यर्थः ।

उ.]तत्पुरुषत्वे स्वरो न सिध्यतीत्याशङ्क्याऽस्तु तर्हि द्वन्द्व इति भाष्योक्तेः स्वरो नेष्टः । उपक्रमे-'कोऽयं समासः? द्वन्द्व' इति सिद्धान्त्युक्तेरत्र द्वन्द्व एवेत्येवाभ्युपेतं सिद्धं त्विति तु सिद्धान्त्येकदेश्युक्तिरित्याहुः । [ चार्थे द्वन्द्वः ] ।

उपसर्जनं पूर्वं।विपर्ययप्रयोग इति ।पदयोर्विपर्ययेण प्रयोग इत्यर्थः। सूत्रव्याख्याने उत्तरग्रन्थानुत्थानमाशङ्क्याह—इदानीमिति । न भिद्यते इति । राजापेक्षयाऽप्रधानलरूपभेदवान्न भवतीत्यर्थः । तदाह—राजापेक्षया न व्यतिरिच्यत इति । व्यतिरेकोऽत्र भेदमूलकसंबन्धः । एवं च राजनिरूपितभेदनिबन्धनसंबन्धवान्न भवतीत्यर्थः । विशेषणनिष्ठ एव संबन्ध इति भावः। परे तु 'षष्ठी सुबन्तेन समस्यत' इत्युक्ते प्रत्यासत्त्या येन सुबन्तेन समासस्तन्निरूपितसंबन्धार्थकत्वम्

१ लुप्तं स्यात् । २ 'दृश्येत' ।

अल्पाच्तरम् ॥ २।२।३४ ॥

किमयं तन्त्रं तरनिर्देशः, आहोस्विदतन्त्रम् ? ॥ किं चातः ? ॥ यदि तन्त्रं द्वयोर्नियमो बहुष्वनियमः ॥ तत्र को दोषः ?॥ 'शङ्खदुन्दुभिवीणाना'-मिति न सिध्यति । दुन्दुभिशब्दस्यापि पूर्वनिपातः प्राप्नोति ॥ अथाऽतन्त्रं 'मृदङ्गशङ्खतूणवाः पृथङ्नदन्ति संसदि' 'प्रासादे धनपतिरामकेशवाना'मि-त्येतन्न सिध्यति ॥ यथेच्छसि तथाऽस्तु । अस्तु तावत्तन्त्रम् ॥ ननु चोक्तम्-'द्वयोर्नियमो बहुष्वनियमः' इति । तत्र 'शङ्खदुन्दुभिवीणाना'मिति न

प्र'] अल्पाच्तरम् । किमयमिति । किं तरवर्थः प्रकर्ष आश्रीयते, अथ स्वार्थे-ऽत एव नि ातनात्तरः कृत इति प्रश्नः । द्वयोरिति । प्लक्षन्यग्रोधावित्यादावेव स्यान्न्यग्रोधशब्दस्याऽल्पाच्त्वात्तदपेक्षया प्लक्षशब्दस्याल्पाच्तरत्वात्। बहुषु तु सन्नि-हितेषु द्विवचनोपपदत्वाऽभावात्तरपोऽनुत्पत्तिरिति तत्राऽनियमप्रसङ्गः। ततश्च 'शङ्ख-दुन्दुभिवीणाना'मित्यत्र दुन्दुभिशब्दस्याऽपि कदाचित्पूर्वनिपातः स्यात् । अतन्त्रे तु तरपि दुन्दुभिशब्दापेक्षयाऽल्पाच्त्वसद्भावाच्छङ्खवीणाशब्दयोरन्यतरस्य पूर्वनिपातो भवति, न तु दुन्दुभिशब्दस्येति दोषाऽभावः।मृदङ्गशङ्खतूणवा इति।शङ्खशब्दस्या-

उ.]गृह्यते इति तदेव षष्ठ्यन्तं प्रथमानिर्दिष्टं,न प्रधानमिति।एवं चाऽर्थात्पूरणगुणेति सूत्रस्थसमानाधिकरणेनेत्यपि प्रत्याख्यातप्रायमेव । समानाधिकरणेन षष्ठीसमासा-ऽप्राप्तेः । षष्ठीतिसूत्रे प्रत्यासत्त्याश्रयणात् । अर्थाऽभेदादिति भाष्यस्याऽयमर्थः-अर्थस्य-पुरुषस्य, राज्ञा भेदाऽभावात्-राजनिरूपितभेदनिबन्धनसंबन्धवत्त्वाऽ-भावात्, किं तु धनादिनिरूपितसंबन्धत्वादिति। संबन्धस्य विशेषणनिष्ठत्वादित्याहुः। ये तु-अर्थाभेदादिति अप्रधानपदोपसर्जनपदयोरिति शेष इत्याहुः, तन्न । 'प्रथमा-निर्दिष्ट'मिति सूत्रस्थभाष्यविरोधात् । बाह्यसम्बन्धिनिरूपिताऽप्राधान्यस्याऽत्रापि सत्त्वाच्च । पूर्वकायाऽसिद्ध्या तयोः पर्यायताया अशक्यस्वीकाराच्च ॥

अल्पाच्त । तरपः श्रवणाद्विचाराऽनुपपत्तिमाशङ्क्याह-किमिति । तन्त्रे तर-निर्देशे प्लक्षन्यग्रोधावित्यादिसिद्ध्यर्थं यत्किंचिदपेक्षयाऽल्पाच्त्वम् । अतिशयस्तूपात्ता-पेक्षया, अतन्त्रे त्वल्पत्वमेवोपात्ताऽपेक्षयेति बोध्यम्।अत एव'शङ्खदुन्दुभिवीणाना'-मित्यस्य सिद्धिस्तत्पक्षे । तत्राऽन्त्यो युक्तः । द्वयोरित्यस्याऽविवक्षावदतिशयस्या-ऽप्यविवक्षौचित्यादित्याहुः । भाष्ये-दुन्दुभिशब्दस्यापीति । न चैतत्प्रवृत्त्यभावेपि 'द्वन्द्वे घी'त्यस्य प्रवृत्त्या दुन्दुभिशब्दस्यैव पूर्वनिपातः प्राप्नोतीत्यपिरसङ्गत इति वाच्यम्,पूर्वयोः पूर्वं द्वन्द्वे ततो वीणाशब्देन द्वन्द्वे तस्य पूर्वनिपाताऽप्राप्त्या तदुक्तेः। तद्ध्वनयन्नाह-कदाचिदिति। अथातन्त्रमितिभाष्याशयमाह-अतन्त्रे इति । अल्पा-

१ 'उताहोस्विद'। २ अपिः क्वचिन्न । ३ 'अथवा पुनरस्तु तन्त्रं ।
४ 'अस्तु तर्ह्यतन्त्रं' । ५ 'सम्बन्धत्वा' । ६ 'यत्तु' ।

सिध्यति। दुन्दुभिशब्दस्यापि पूर्वनिपातः प्राप्नोती'ति ॥ नैष दोषः। यत् तदल्पाच्तरमिति तदल्पाजिति वक्ष्यामि ॥ अथ वा पुनरस्त्वतन्त्रस्[?] ॥ यत् चोक्तं-'मृदङ्गशङ्खतूणवाः पृथङ्नदन्ति संसदि' 'प्रासादे धनपतिरामकेशवा-ना'मित्येतन्न सिध्यती'ति ॥*॥ अतन्त्रे तरनिर्देशे शङ्खतूणवयोर्मृदङ्गेन समासः ॥*॥ अतन्त्रे तरनिर्देशे शङ्खतूणवयोर्मृदङ्गेन सह समासः करिष्यते। शङ्खश्च तूणवश्च शङ्खतूणवौ। मृदङ्गश्च शङ्खतूणवौ च मृदङ्गशङ्खतूणवाः। रामश्च केशवश्च रामकेशवौ। धनपतिश्च रामकेशवौ च धनपतिरामकेशवाः। [तेषां] धनपतिरामकेशवानामिति ॥

अथ यत्र बहूनां पूर्वनिपातप्रसङ्गः किं तत्रैकस्य नियमो भवत्याहो-स्विदविशेषेण ? ॥*॥ अनेकप्राप्तावेकस्य नियमोऽनियमः शेषेषु ॥*॥ अनेकप्राप्तावेकस्य नियमो भवति, शेषेष्वनियमः। पटुमृदुशुक्लाः। पटुशुक्लमृदवः इति ॥*॥ ऋतुनक्षत्राणामानुपूर्व्येण समानाक्षराणाम् ॥*॥ ऋतुनक्षत्राणाम्

प्र.]ल्पाच्त्वात्पूर्वनिपातः प्राप्नोति। तन्त्रे तु तरपि पूर्वोक्तेन न्यायेन बहुष्वनियमाद्[?]द्रूपं सिध्यति। यदेतदिति। तन्त्रे दोषप्रसङ्गात्प्रयोजनाऽभावाच्च तरनिर्देशो न कर्तव्य इत्यर्थः। अतन्त्रे तु तस्मिंस्तरपः स्वार्थिकत्वज्ञापनमेव तरनिर्देशस्य प्रयोजनम्।

शङ्खतूणवाविति। नियतद्रव्यविवक्षायां जातिपरत्वाऽभावादेकवद्भावाऽभावात् तूर्याङ्गाणामित्यपि न भवति। शङ्खस्याऽतूर्याङ्गत्वादित्येके। तूर्यशिल्पोपजीविन एव तूर्याङ्गत्वेन गृह्यन्ते। तेषां हि मुख्यं तूर्याङ्गत्वमित्यपरे। अथ यत्रेति। यदि जातिपदार्थपक्ष आश्रीयते तदा लक्षणाऽऽवृत्त्यभावादेकस्यैव नियमे सति शेषा-णामनियमेन भाव्यम्। अथ व्यक्तिपक्षस्तदा पुनः पुनर्लक्षणप्रवर्तनात्सर्वेषां नि[?]

उ.]च्त्वेति। परत्वादस्यैव प्रवृत्तेरिति भावः। 'मृदङ्गशङ्खतूणवा' इति पक्षद्वयेऽपि भाष्योक्तरीत्यैव साध्यम्। अतन्त्रपक्षे त्वारोपिताऽतिशये तरप्पारायणे दृष्टः स्वरितादिति सूत्रेऽनुदात्तानामिति बहुवचननिर्देशवत्। तन्त्रे तरनिर्देशे बहुषु नि[?]माय भाष्ये उक्तम्-'अल्पाजिति वक्ष्यामी'ति। यतः कुतश्चित्सर्वस्याऽप्यल्पाच्क[?]मर्थ्यादतिशयप्रतीतिः। एवं च द्वयोरित्यंशाऽभावाच्छङ्खदुन्दुभीत्यादिसिद्धिः। [?] च द्वयोरित्यंशत्यागपूर्वकमतिशयो विवक्षित इति तात्पर्यम्। 'मृदङ्गे'त्यादौ [?] समासे तु शङ्खस्यैव पूर्वनिपात इति बोध्यमिति परे। नियतद्रव्येति। जातिप्र[?] हि तदाश्रयसर्वव्यक्तीनां विनिगमनाविरहेण नान्तरीयकत्वाद्बोध इति भावः। [?] लक्षणेति। एतदुदाहरणावच्छिन्नघित्वजात्यवच्छिन्ने क्वचित्प्रवृत्त्या चरितार्थत्वात्, [?] युगपदवध्यवधिमद्भावाऽसंभवाच्च, अन्त्यस्यावधित्वेप्येकस्य व्यवधानाच्च पुनर्ल[?]

१ अपिः क्वचिन्न। २ 'वक्ष्यामीति'। ३ 'तरब्नि'। ४ 'सहसमासः'[?]। ५ 'तूणवौ च मृदङ्गश्च'। ६ 'राम केशवौ च धनपतिश्च'। ७ [?] ८ 'नैकस्य प्रा'। ९ 'शेषे'। १० 'अनेकप्रा'।

नुपूर्व्येण समानाक्षराणां पूर्वनिपातो वक्तव्यः । शिशिरवसन्तावुदगयनस्थौ । कृत्तिकारोहिण्यः ॥*॥ अभ्यर्हितम् ॥*॥ अभ्यर्हितं च पूर्वं निपततीति वक्तव्यम् । मातापितरौ । श्रद्धामेधे ॥*॥ लघ्वक्षरम् ॥*॥ लघ्वक्षरं पूर्वं निपततीति वक्तव्यम् । कुशकाशम् । शरचापम् ॥ अपर आह—सर्वत एवाभ्यर्हितं पूर्वं निपततीति वक्तव्यम् । लघ्वक्षरादपीति ॥ श्रद्धातपसी दीक्षातपसी ॥*॥ वर्णानामानुपूर्व्येण॥*॥वर्णानाञ्चानुपूर्व्येण पूर्वनिपातो भवतीति वक्तव्यम् । ब्राह्मणक्षत्रियविट्शूद्राः ॥*॥ भ्रातुश्च ज्यायसः ॥*॥ भ्रातुश्च ज्यायसः पूर्वनिपातो भवतीति वक्तव्यम् । युधिष्ठिरार्जुनौ ॥*॥ सङ्ख्याया अल्पीयसः ॥*॥सङ्ख्याया अल्पीयसः पूर्वनिपातो भवतीति वक्तव्यम् । एकादश द्वादश ॥*॥ धर्मादिषूभयम् ॥*॥ धर्मादिषूभयं पूर्वं निपततीति वक्तव्यम् । धर्मार्थौ, अर्थधर्मौ । कामार्थौ, अर्थकामौ । गुणवृद्धी, वृद्धिगुणौ । आद्यन्तौ, अन्तादी ॥ [ अल्पाच्तरम् ] ॥

## सप्तमी विशेषणे बहुव्रीहौ ॥ २।२।३५ ॥

॥*॥ बहुव्रीहौ सर्वनामसङ्ख्ययोरुपसङ्ख्यानम् ॥*॥ बहुव्रीहौ सर्वनाम-

---

प्र.]मेन भाव्यमिति मत्वा पृच्छति । उत्तरं तु लक्ष्यदर्शनवशाज्जातिपक्षाश्रयेण । उदगयनस्थाविति। उत्तरायणस्थौ। लौकिक[प्र]योगप्रदर्शनपरमिदम् । मातापितराविति । गर्भधारणादिना पित्रपेक्षया माताऽभ्यर्हिता । श्रद्धामेधे इति । सत्यां श्रद्धायामर्थक्रियाकारिणी मेधेति श्रद्धाया अभ्यर्हितत्वम् । लघ्वक्षरादपीति । पूर्वविप्रतिषेधेन । दीक्षातपसी इति । दीक्षार्थं तपश्चरणमिति दीक्षाया अभ्यर्हितत्वं, स्वरूपेण वा । वर्णानामिति । वेददर्शनाश्रयेणोत्पत्तिक्रमेण वर्णानामानुपूर्व्यम् । अल्पीयस इति । 'अर्थस्य वाचिकाया' इति शेषः । एतच्च द्वन्द्वाऽद्वन्द्वविषयमित्याहुः । 'द्व्येकयो'रिति तु सौत्रो निर्देशः ॥ [ अल्पाच्तरम् ] ॥

सप्तमी । विश्वदेव इति । यदा विश्वस्य विशेष्यत्वं तदेदमुदाहरणम् ।

---

उ.]ऽप्रवृत्तेरिति भावः । व्यक्तिपक्ष इति । एतदुदाहरणावच्छिन्नतत्तद्द्विलव्यक्तिविषयकलक्षणभेदेन तेषामचारितार्थ्यात्पुनः पुनः प्रवृत्तिरस्त्येवेति भावः । वस्तुतो वाचनिकमेवेदं, जातिपक्षेप्यावृत्तिं विनैव तज्जात्याश्रयसर्वविषयकत्वाऽसंभवात् । उदगयनस्थावित्यस्याऽनुपयोगादाह—लौकिकेति। वेददर्शनेति। 'ब्राह्मणोऽस्य मुखमासी'दित्यादिवेददर्शनम्।'अल्पीयस्या' इत्युचितमत आह—अर्थस्येति । एतच्चेति। अत एव तत्पुरुषेप्येकादशेत्येव । बहुव्रीहौ 'द्वित्रा' इत्यादिसिद्धिश्चेत्याहुः ।

सप्तमी । यदा विश्वस्येति।'देव' इत्युपक्रमे तस्य तत्त्वसंभवः। विश्वं देवो

---

१ क्वचिन्न । २ 'शरशीर्य' 'शरगिर्य' । ३ अत्र उदाहरणव्यत्ययः क्वचित् । ४ अल्पीयस्याः' ५ 'निपातो वक्तव्यः' ।

सङ्ख्ययोरुपसङ्ख्यानं कर्तव्यम् ॥ विश्वदेवः । विश्वयशाः। द्विपुत्रः। द्विभार्यः। अथ यत्र सङ्ख्यासर्वनाम्नोरेव बहुव्रीहिः कस्य तत्र पूर्वनिपातेन भवितव्यम्? परत्वात्सङ्ख्यायाः,—द्व्यन्याय त्र्यन्याय ॥*॥ वा प्रियस्य ॥*॥ वा प्रियस्य पूर्वनिपातो भवतीति वक्तव्यम् । प्रियगुडः गुडप्रियः ॥*॥ सप्तम्याः पूर्वनि गड्वादिभ्यः परवचनम् ॥*॥ सप्तम्याः पूर्वनिपाते गड्वादिभ्यः परा सप्तमी भवतीति वक्तव्यम् । गडुकण्ठः गडुशिराः ॥ [ सप्तमी वि ] ॥

निष्ठा ॥ २।२।३६ ॥

॥*॥ निष्ठायाः पूर्वनिपाते जातिकालसुखादिभ्यः परवचनम् ॥*॥ निष्ठायाः पूर्वनिपाते जातिकालसुखादिभ्यः परा निष्ठा भवतीति वक्तव्यम् । शार्ङ्गजग्धी । पलाण्डुभक्षिती । मासजाता । संवत्सरजाता । सुखजाता । दुःखजाता ॥*॥ न वोत्तरपदस्याऽन्तोदात्तवचनं ज्ञापकं परभावस्य ॥*॥ न वा वक्तव्यम् ॥ किं कारणम् ? ॥ 'उत्तरपदस्यान्तोदात्तवचनं ज्ञापकं परभावस्य' । यदयं जातिकालसुखादिभ्यः परस्या निष्ठाया उत्तरपदस्यान्तोदात्तत्वं शास्ति तज्ज्ञापयत्याचार्यः—'पराऽत्र निष्ठा भवती'ति ॥*॥ प्रतिषेधे पूर्वनिपातप्रसङ्गस्तस्माद्राजदन्तादिषु पाठः ॥*॥ प्रतिषेधे तु पूर्वनिपातः प्राप्नोति 'अकृतमितप्रतिपन्नाः' इति, तस्माद्राजदन्तादिषु पाठः कर्तव्यः ॥*॥ [ प्रतिषेधवचनं ज्ञापकं परभावस्य ॥*]॥ न वा कर्तव्यः । अत्रापि प्रतिषेधवचनं ज्ञापकं—'परा निष्ठा भवती'ति ॥*॥ प्रहरणार्थेभ्यश्च ॥*॥ प्रहरणा

प्र.]विशेषणत्वे तु सूत्रेणैव सिद्धः पूर्वनिपातः।द्विपुत्र इति। दिक्प्रदर्शनमेतत् हि विशेषणत्वादेव सिद्धः सङ्ख्यायाः पूर्वनिपातः। तस्माद्द्विशुक्ल इत्याद्युदाहरणं परत्वात्सङ्ख्याया इति । शब्दपरविप्रतिषेधात् । एवमर्थमेव च सङ्ख्यासर्वनाम्नोरिति न कृतम् । [ सप्तमीविशेषणे ] ॥

निष्ठा । प्रतिषेधे त्विति। 'अकृतमितपतिपन्ना' इति कृतादीनामन्तोदात्त प्रतिषेधादन्तोदात्तविधानाज्ज्ञापितः परनिपातोपि न स्यादित्यर्थः।नवेति।उत्तरपदस्या न्तोदात्तत्वे प्रसक्ते प्रतिषेधः क्रियते । यदि च परनिपातस्ततस्तत्प्रसङ्गो नास्ति

उ.]यस्येति विग्रहः'न संज्ञाया'मिति कन्निषेधः।द्विशुक्ल इति।द्वौ शुक्लगुणौ यस्य अत्र हि द्वयोर्गुणवाचित्वादनियमो विशेषणत्वस्य । पुत्रभार्याशब्दावपि गुणवाचिनावि विति भाष्याशयः । जन्यपुंस्त्वधर्मभोग्यस्त्रीत्वयोर्गुणत्वादित्यन्ये । [ सप्तमी ]

निष्ठा । यदयमिति—भाष्ये। बहुव्रीहौ आच्छादनभिन्नजात्यादिभ्यः परं पदं क्तान्तमन्तोदात्तं, कृतादीन्वर्जयित्वेति सूत्रार्थः । [निष्ठा] ।

१ 'देवाः'। २ क्वचिन्न। ३ 'निपातो वक्तव्यः'। ४ 'भक्षिता'। ५ परायाः'। ६

श्च परे निष्ठासप्तम्यौ भवत इति वक्तव्यम्। अस्युंद्यतः मुंसलोद्यतः। असिपाणिः दण्डपाणिः ॥*॥ द्वन्द्वे घ्यजाद्यदन्तं विप्रतिषेधेन ॥*॥ द्वन्द्वे घीत्यस्मादजाद्यदन्तमित्येतद्भवति विप्रतिषेधेन। 'द्वन्द्वे घी'त्यस्यावकाशः—पटुगुप्तौ। 'अजाद्यदन्त'मित्यस्यावकाशः—उष्ट्रखरौ। इहोभयं प्राप्नोति—इन्द्राग्नी। 'अजाद्यदन्त'मित्येतद्भवति विप्रतिषेधेन ॥*॥ उभाभ्यामल्पाच्तरम् ॥*॥ उभाभ्यामल्पाच्तरमित्येतद्भवति विप्रतिषेधेन। 'द्वन्द्वे घी'त्यस्यावकाशः—पटुगुप्तौ। 'अल्पाच्तर'मित्यस्यावकाशः—वाग्दृषदौ। इहोभयं प्राप्नोति-वागग्नी। 'अल्पाच्तर'मित्येतद्भवति विप्रतिषेधेन॥ 'अजाद्यदन्त'मित्यस्यावकाशः—उष्ट्रखरौ। 'अल्पाच्तर'मित्यस्यावकाशः—स एव। इहोभयं प्राप्नोति वागिन्द्रौ। 'अल्पाच्तर'मित्येतद्भवति विप्रतिषेधेन॥ [ निष्ठा ] ॥

## कडाराः कर्मधारये ॥ २।२।३८ ॥

॥*॥ कडारादयः ॥*॥ कडारादय इति वक्तव्यम्। इहापि यथा स्यात्—गडुलशाण्डिल्यः शाण्डिल्यगडुलः। खण्डवात्स्यः। वात्स्यखण्डः॥ तत्तर्हि वक्तव्यम्?॥ न वक्तव्यम्। बहुवचननिर्देशात्कडारादय इति विज्ञास्यते॥ इति श्रीमद्भगवत्पतञ्जलिविरचिते द्वितीयस्याध्यायस्य द्वितीये पादे द्वितीयमाह्निकम्॥ पादश्च समाप्तः॥ २।२।२॥

## अनभिहिते ॥ २।३।१ ॥

अनभिहित इत्युच्यते किमिदमनभिहितं नाम?॥ 'उक्तं निर्दिष्ट-

---

प्र.] कडाराः। बहुवचननिर्देशादिति। कडारशब्दस्यैकत्वादेकवचने कर्तव्ये साहचर्यादारोपितकडाररूपगडुलादिशब्दगतबहुत्वापेक्षो बहुवचननिर्देशः, यथा छत्रिणो यान्तीति। इत्युपाध्यायजय्यटपुत्रकैयटकृते महाभाष्यप्रदीपे द्वितीयस्याध्यायस्य द्वितीये पादे द्वितीयमाह्निकम्। द्वितीयः पादः समाप्तः। २।२।२॥

अनभिहिते। प्रत्याख्यानवादी स्ववाचाऽनभिहितशब्दार्थमारम्भवादिनं संजल्पयितुं पृच्छति—किमिदमिति। अभिपूर्वस्तावद्धातिर्बन्धनोच्चारणप्रतिपादनेषु वर्तते। 'अश्वाभिधानीमादत्ते' इत्यत्र बन्धनवृत्तिः। 'अभिहितः श्लोक'इत्युच्चारण-

---

उ.] कडाराः कर्म। कडारशब्दस्येति। बहुवचनसामर्थ्यादजहल्लक्षणा छत्रिण इतिवदाश्रयणीयेत्यर्थः। इति श्रीनागोजीभट्टविरचिते भाष्यप्रदीपोद्योते द्वितीयाध्यायस्य द्वितीये पादे द्वितीयमाह्निकम्। पादश्च समाप्तः। २।२।२॥

अनभिहिते। स्ववाचेति। प्रयोजककर्त्र्येत्यर्थः। करणभूतयेत्यर्थो वा। स्वशब्देनाऽऽरम्भवादी। स्वरूपार्थयोः प्रसिद्धत्वेपि तस्याऽनेकार्थत्वात्सिद्धान्त्य-

---

१ पूर्वापरव्यत्ययः क्वचित्। २ 'द्वन्द्वे घ्यजाद्यदन्तमुभाभ्यामल्पाच्तरं विप्र'। ३ 'उष्ट्रखरं'। ४ 'वाग्दृषदं'। ५ क्वचिन्न। ६ इदं वार्तिकमित्यन्ये।

मभिहित'मित्यनर्थान्तरम् । यावद्ब्रूयादनुक्ते, 'अनिर्दिष्टे' इति, तावदन-भिहिते इति ॥*॥ अनभिहितवचनमनर्थकमन्यत्रापि विहितस्याऽभावादभि-हिते ॥*॥ अनभिहितवचनमनर्थकम् ॥ किं कारणम् ?॥ 'अन्यत्रापि विहि-तस्याऽभावादभिहिते' । अन्यत्राऽप्यभिहिते विहितं न भवति॥ क्वान्यत्र ?॥ चित्रगुः, शबलगुः,—बहुव्रीहिणोक्तत्वान्मत्वर्थस्य मत्वर्थीयो न भवति। गर्गाः, वत्साः, विदाः, उर्वाः,—यञञ्भ्यामुक्तत्वादपत्यार्थस्य न्याय्योत्पत्तिर्न भवति। सप्तपर्णोऽष्टापदमिति,—समासेनोक्तत्वाद्वीप्साया द्विर्वचनं न भवति। यत्तावदुच्यते'—चित्रगुः शबलगुरिति बहुव्रीहिणोक्तत्वान्मत्वर्थस्य

प्र.]वृत्तिः। 'अभिहितोऽर्थ' इति प्रतिपादनवृत्तिः। हिनोतेरपि गतिवृद्ध्यर्थस्याभिहित-मिति भवति,तत्र वक्ष्यमाणानां कर्मादीनामर्थानां बन्धनाद्यर्थचतुष्टयाऽसंभवात्प्रति-पादनवचन एवाऽभिहितशब्द आश्रयणीयस्ततः प्रयोजनाऽभावादनर्थकं सूत्रमिति भावः। पूर्वोक्तेनाभिप्रायेणाह—उक्तमिति । प्रतिपादितमित्यर्थः। यथा 'उक्तार्थानाम-प्रयोग' इति । यावद्ब्रूयादिति । यावत्तावच्छब्दौ निपातावभिन्नार्थत्वं प्रति-पादयतः । अनभिहितवचनमिति । अर्थप्रत्यायनाय लोके शब्दः प्रयुज्यते, स चाऽर्थो यदा शब्दान्तरेण प्रतिपादितो भवति तदा प्रयोजनाऽभावाच्छब्दान्तरस्य प्रयोगेण न भाव्यम् । अक्षिनिकोचादिभिरप्यवगतेऽर्थे शब्दो न प्रयुज्यते, किं पुनः शब्दान्तरप्रतिपादितेऽर्थे । यञञ्भ्यामिति । यञन्तेनाऽञन्तेन चेत्यर्थः। यञञोस्तु लुप्तत्वादर्थाभिधानं न संभवति । न्याय्योत्पत्तिरिति । उत्सर्गः पूर्वा-चार्यप्रसिद्ध्या 'न्याय्य' उच्यते । बहुवचनोदाहरणं—गार्ग्यौ गार्ग्याविति, अत्र यञैव परदेशस्याऽवष्टब्धत्वादण उत्पत्त्यभावात् । बहुवचने तु यञञोर्लुप्तत्वाद्वि-रोधकाऽभावादुक्तार्थत्वाश्रयेणैवाऽणोऽनुत्पत्तिः प्रतिपाद्या । सप्तपर्ण इति। वीप्साया विषये द्विर्वचनमुच्यते, अस्ति चेह वीप्सा—सप्त सप्त पर्णान्यस्येति । समासेन तु

उ.]भिमतमर्थं तन्मुखेन वाचयित्वा सूत्रं प्रत्याख्यातुं प्रश्न इति भावः। अर्थचतु-ष्टयासंभवादिति । तद्विषयत्वाऽसंभवादित्यर्थः। भाष्ये—विहितस्याभावादभिहिते इति । लौकिके प्रयोगे लाघवानादरेण भवत्येव तथा प्रयोगो, विहितस्य तु नेत्य-शयेन तदुक्तं । न संभवतीति । 'ताभ्या'मिति शेषः । कस्यापि तद्धितस्यान्यथे-नोत्पत्त्यसंभवाद्यर्थं विशेषणमत आह—उत्सर्ग इति । विरोधकाऽभावादिति। परदेशरोधकाऽभावादित्यर्थः । अण इति । इदमुपलक्षणमिञ इति बोध्यम् । सप्तपर्णशब्दे समासे द्वित्वाऽभावात्कथं वीप्सावगतिस्तत्राह—समासेन त्विति। ननु सर्वथोक्तार्थानामप्रयोग इति न्याये सति सूत्रारम्भानुपपादनात्किं यत्तावदिति

१ 'अष्टापद इति'। २ 'भवतीति'। ३ 'वगतार्थः'। ४ 'पादितार्थः'। ५ 'विरोधाऽभावा'।

मत्वर्थीयो न भवती'ति ॥ अस्तिसामानाधिकरण्ये मतुब्विधीयते न चात्राऽस्तिना सामानाधिकरण्यम् ॥ यदप्युच्यते–'गार्गा वत्सा बिदा उर्वाः,–यञञ्याभ्यामुक्तत्वादपत्यार्थस्य न्याय्योत्पत्तिर्न भवती'ति ॥ समर्थानां प्रथमाद्वे'ति वर्त्तते, न चैतत्समर्थानां प्रथमम् ॥ किं तर्हि ? ॥ द्वितीयमर्थमुपसङ्क्रान्तम् ॥ यदप्युच्यते–'सप्तपर्णोऽष्टापदमिति,–समासेनोक्तत्वाद्वीप्साया द्विर्वचनं न भवती'ति ॥ यदत्र वीप्सायुक्तं नाऽदः प्रयुज्यते ॥ किं पुनस्तत् ? ॥ पर्वणि पर्वणि सप्त पर्णान्यस्य । पङ्क्तौ पङ्क्तावष्टौ पदानीति ॥ श्नम्बहुजकश्च तर्हि । श्नम्–भिनत्ति छिनत्ति । श्नमोक्तत्वात्कर्तृत्वस्य कर्तरि शन्न भवति ॥

प्र.]शब्दशक्तिस्वाभाव्याद्वीप्साया गमितत्वाद्विर्वचनाऽभावः । आरम्भवादी दृष्टान्तेष्वन्यथासाध्यसिद्धिं प्रतिपादयितुमाह–यत्तावदिति । न चाऽत्रास्तिनेति । वर्तिपदयोरन्यपदार्थे उपसङ्क्रान्तत्वादस्त्यर्थस्य तत्रैवान्तर्भूतत्वात्स्वार्थस्य संसृष्टत्वादस्तिसामानाधिकरण्याऽभावः । यदा त्वन्यपदार्थेन तद्वत्ता प्रतिपिपादयिषिता तदा चित्रगुमानिति भवत्येव । न चैतदिति । 'समर्थानां प्रथमाद्वे'त्यधिकारादपत्यवद्वाचिनः षष्ठ्यन्तात्प्रत्ययेन भाव्यं, न त्वपत्यवाचिनः । यञञोस्तु लुकि कृते प्रकृतिरेवापत्यार्थाभिधायिनीत्यण्न भवतीत्यर्थः । यदत्रेति । वीप्स्यमानार्थाभिधायिनः पदस्य द्विर्वचनं विधीयते । पर्वार्थस्य वीप्सयायोगः, न चाऽत्र पर्वशब्दस्य प्रयोगः । श्नमोक्तत्वादिति। भावकर्मकर्तारो विकरणार्था इति पूर्वाचार्यदर्शनमाश्रि-

उ.]ग्रन्थेनाऽऽह आह–आरम्भवादीति। तथा च तन्न्याये फलाऽभावेन तन्न्यायसत्त्वे न मानमित्यभिमानः। भाष्ये–नचाऽत्रास्तिनेति। वर्त्तिपदार्थानामन्यपदार्थेन संसृष्टत्वात्पृथक्त्वाऽभावेन वहिर्भूताऽस्तिसामानाधिकरण्याऽभाव इति भावः । यत्तु कैयटेनाऽस्त्यर्थस्य तत्रैवान्यपदार्थे एवान्तर्भूतत्वादित्युक्तं, तदनुपयुक्तम्, वहुव्रीहावस्त्यर्थानन्तर्भावस्य मतुप्सूत्रे भाष्ये उक्तत्वात् । तत्र हि–तद्धितार्थद्विगवपेक्षया पञ्चगुरित्यादौ वहुव्रीहेरन्तरङ्गत्वमुक्तं–'विशिष्टस्य षष्ठ्यर्थस्य तद्धितार्थत्वादस्त्यर्थोऽवश्यापेक्ष्यो द्विगुना । षष्ठ्यर्थमात्रापेक्षस्तु वहुव्रीहिः'इति कैयटः। स्वार्थस्यसंसृष्टत्वादिति । 'अन्यपदार्थेने'ति शेषः । स्वार्थो–वर्त्तिपदार्थः । अत्रोपसंक्रान्तत्वं हेतुः । तच्च नियमेन विशेषणत्वम् । भाष्ये 'द्वितीयमर्थमुपसंक्रान्त'मित्यस्य—तस्यापत्यमितिसूत्रस्थद्वितीयपदवाच्यमर्थमित्यर्थ इत्याशयेनाह–समर्थानामिति । नचात्रेति । 'सप्तपर्ण'शब्दस्तु तादृशे वृक्षविशेषे रूढ इति भावः । भाष्ये–पङ्क्तौ पङ्क्ताविति । 'अष्टापदं शारिफल'मित्यमरः । पूर्वाचार्येति । स्वमते तु विकरणा द्योतका इत्यभिमानः । वस्तुतो वहुजकचोरपि द्योतकत्वाद्द्योतकविषयेप्ययं न्यायः । द्योतकविषयेपि एकेन द्योतिते उक्तार्थानामिति न्यायेनाऽपरद्योतका-

१'उर्वाइति'।२अष्टापद इति।३'पदान्यस्य'।४इदं वार्त्तिकमित्यन्ये।५'द्विगुः।६'वहुक'।

बहुच्–बहुकृतं बहुभिन्नमिति । बहुचोक्तत्वादीषदसमाप्तेः कल्पबादयो भवन्ति ॥ अकच्–उच्चकैः नीचकैरिति । अकचोक्तत्वात्कुत्सादीनां कादयो भवन्ति ॥ ननु च श्नम्बहुजकचोऽपवादास्तेऽपवादत्वाद्बाधका भविष्यन्ति ॥*॥ श्नम्बहुजकच्सु नानादेशत्वादुत्सर्गाऽप्रतिषेधः ॥*॥ समानदेशैरपवादै रुत्सर्गाणां बाधनं भवति । नानादेशत्वान्न प्राप्नोति ॥ किं पुनरिहाऽकर्तव्यो ऽनभिहिताधिकारः क्रियते, आहोस्विदन्यत्र कर्तव्यो न क्रियते ? ॥ इह ऽकर्तव्यः क्रियते । एष एव हि न्याय्यः पक्षो यदभिहिते विहितं न स्यात् ॥*॥ अनभिहितस्तु विभक्त्यर्थस्तस्मादनभिहितवचनम् ॥*॥ अनभिहित

प्र.]त्यैवमुक्तम्। अत्राप्यन्यथासिद्धिमाह–नन्विति। ततश्चोक्तत्वस्य दृष्टान्ताऽभावा दहेतुत्वम् । नानादेशत्वादिति । विरोधो बाधकारणं न विशेषविधानमेव वार्तिककारस्य चेदं दर्शनम् । भाष्यकारस्तु विरोधाऽभावेपि विशेषविधानमात्रेण बाधकत्वमन्यत्राऽवोचत् । तक्रदानं च दधिदानस्य विरोधाऽभावेपि लोके बाध दृश्यते । तदेवं श्नमादिदृष्टान्तावष्टम्भेन हेतुत्वमुक्तत्वस्य व्यवस्थापितम् । इदा मारम्भवादी पक्षान्तरमाश्रयिष्यामीति पृच्छति–किं पुनरिति । आहोस्विदन्य ति। 'अपूपौ द्वा'वित्यभिहितेपि प्रत्ययेन द्वित्वे द्विशब्दस्य प्रयोगदर्शनाच्छ्नमादि रभिहिते शबादिनिवृत्त्यर्थः कर्तव्यः सन्न क्रियत इत्यर्थः । प्रत्याख्यानवादी इहाऽकर्तव्य इति । अपूपौ द्वावित्यादौ तु गतार्थस्यापि द्विशब्दस्य लोके प्रयो दृश्यते । अन्यस्य तु गतार्थस्य प्रयोगाऽभावः प्रयोजनाऽभावादेव सिद्धः । इदानी मेकत्वादीनां विभक्त्यर्थत्वमाश्रित्य सूत्रं समर्थयितुमाह–अनभिहितस्त्विति 'कर्मणि द्वितीये'त्यादेर्बहुषु बहुवचनमित्यादिनैकवाक्यता । तत्र यदैकत्वादि

उ.]ऽभाव इति बोध्यम् । भाष्यकारस्त्विति । 'येन नाप्राप्ते यो विधिरारभ्यते तस्यापवाद' इति लक्षणानुसारेण तक्रकौण्डिन्यन्यायमूलकेन सत्यपि सम्भवे बाध मिति तद्भावः । तन्मतेऽप्ययं न्याय आवश्यकः । यथोक्तं–'समासेनाभिहि सुजर्थ इति द्विदशा इत्यादौ सुज्ने'ति । इदानीमिति । दृष्टान्तानामन्यथासिद्धि परिहारे जात इत्यर्थः । अन्यस्य त्विति । शास्त्रविहितस्येत्यर्थः । लौकिके प्र लाघवाऽनादरादिति भावः । एवमेव व्यतिलुनीत इत्यत्रापि समावेशः । तत्र हि पूर्वमात्मनेपदं, ततः स्पष्टं तत्प्रतीतये व्यतिप्रयोगोपि । अपूपावित्यत्र द्विवचनं विरुद्धविभक्त्यपेक्षयाऽनुवादकविभक्तेर्न्यायसिद्धत्वात्कृतम्। भाष्ये—विहितं न स्या दिति । न भवितुमर्हतीत्यर्थः । 'अर्हे कृत्यतृचश्चे'ति चादर्हे लिङ् । एकत्वादी नामिति । संख्यावाक्यविभक्तिविधानयोरेकवाक्यत्वपक्षे एकत्वादीनां विशेष्यत्व

१ 'भवन्तीति' । २ 'ष्यन्तीति' । ३ 'भविष्यति' । ४ 'न्यायः' । ५ ... ६ 'त्वस्य स्थापि' । ७ 'मुक्तार्थत्वस्य' ।

विभक्त्यर्थः ॥ कः पुनर्विभक्त्यर्थः ? ॥ एकत्वादयो विभक्त्यर्थाः । तेष्वनभिहितेषु कर्मादयोऽभिहिता विभक्तीनामुत्पत्तौ निमित्तत्वाय मा भूवन्निति ॥ 'तस्मादनभिहितवचनम्' ॥ तस्मादनभिहिताधिकारः क्रियते ॥ अवश्यं चैतदेवं विज्ञेयम्—'एकत्वादयो विभक्त्यर्था' इति ॥*॥ अभिहिते हि

प्र.]विशेषणानि,कर्मादीनि विशेष्याणि,एकस्य यत्कर्म तत्र द्वितीयैकवचनमिति,तदा कर्म द्वितीयार्थः संपद्यते । तच्च यदा कृदादिभिरभिहितं भवति, तदा गतार्थत्वाद्द्वितीयाः प्राप्तिरेव नास्तीति, नार्थोऽनभिहिताधिकारेण । यदा तु कर्मादीनां विशेषणत्वमेकत्वादीनां विशेष्यत्वं, कर्मणो यदेकत्वादि तत्र द्वितीयेति, तदैकत्वादयो विभक्त्यर्थाः संपद्यन्ते । ते चाऽभिहितेष्वपि कृदादिभिः कर्मादिष्वनभिहिता इति तदभिधानाय द्वितीयादीनां प्रसङ्गे तन्निवारणाय कर्तव्योऽनभिहिताधिकारः। 'कर्मणि द्वितीये'त्यादौ कर्मादीनां श्रुतत्वात्तेषामेव विभक्त्यर्थत्वेन भाव्यमिति मत्वा पृच्छति—कः पुनरिति । एकत्वादय इति । 'कर्मणि द्वितीये'त्यादिसप्तमीनिर्देश एकत्वाद्यपेक्षः—कर्मणि यदेकत्वादि तत्र द्वितीयेति, न त्वभिधेयप्रतिपादनाय । निमित्तत्वायेति। कर्माद्याश्रितानामेकत्वादीनामपि विभक्त्यर्थत्वे पारम्पर्येण कर्मादीनां निमित्त-

उ.]लभ्येत्यर्थः । आदिना द्वित्वादि। तदाह—कर्मणीति । एकस्य यदिति । एकत्वाश्रयो यत्कर्मेत्यर्थः । 'द्व्येकयो'रिति षष्ठीति भावः । परेत्विदं चिन्त्यं, बहुष्वित्यत्र सप्तमीदर्शनेन द्व्येकयोरित्यस्यापि सप्तमीत्वौचित्यात् । तस्मात्प्रातिपदिकार्थस्यैकत्वे सति तद्गतकर्मत्वशक्तौ द्वितीयैकवचनमित्यर्थ उचितः । अयं च सङ्ख्यान्तं चतुष्कं प्रातिपदिकार्थ इति पक्षे । त्रिकपक्षे तु कर्मणि द्वितीया भवतीत्येवार्थोऽस्य सूत्रस्य,ततःकर्मण एकत्वे तदेकवचनमित्यर्थः सङ्ख्याबोधकस्य । इदमेवाभिप्रेत्यात्रे एतन्मते 'कर्मण एकत्वे' इत्यादिक्रमेणार्थं दर्शयिष्यति भगवानित्याहुः। नार्थ इति । प्रधानार्थस्योक्तत्वेन विशेषणीभूतार्थानुक्तावपि तेन न्यायेनाऽतिप्रसङ्गविरहात्तन्मात्रबोधनस्य प्रथमया सिद्धत्वाच्चेति भावः । तदभिधानायेति । उक्तार्थानामिति न्यायस्तु प्रधानार्थविषय इति भावः। तेषामेवेति । तथा च सङ्ख्याया विभक्त्यर्थत्वमसम्भावितमिति भावः । सप्तमीनिर्देश इति । ननु द्वितीयायाः सूत्रे श्रुतत्वात्तदपेक्षयैव सप्तमी उचिता, न त्वेकत्वापेक्षया,किं च सङ्ख्यायाः प्रायेण विशेषणत्वस्यैव दृष्टत्वादेकत्वविशिष्टे कर्मणीत्येवार्थ उचित इति चेन्न, कारकस्य प्रातिपदिकार्थत्वेन तत्र विधानाऽनुपयोगाच्छुद्धनियमार्थत्वापेक्षया एकत्वविशेषणतया विधित्वद्वारा आर्थनियमस्यापि सिद्धिरिति विधित्वाय तथैवान्वय उचित इत्याशयात् । तत्र पक्षे यथा प्रातिपदिकेनोक्ते द्वितीयादयो भवन्ति तथा तिङाद्यभिहितेपि

१ 'भिहितेषु सत्सु' । २ 'एकं यत्' ।

प्रथमाऽभावः ॥*॥ यो हि मन्यते—'कर्मादयो विभक्त्यर्थास्तेष्वभिहि सामर्थ्यान्मे विभक्तीनामुत्पत्तिर्न भविष्यती'ति प्रथमा तस्य न प्राप्नोति क ? ॥ वृक्षः प्लक्षः ॥ किं कारणम् ? ॥ प्रातिपदिकेनोक्तः प्रातिपदि इति ॥ न कचित्प्रातिपदिकेनाऽनुक्तः प्रातिपदिकार्थः, उच्यते च प्रथ सा वचनाद्भविष्यति ॥ तवैव तु खल्वेष दोषः—यस्य ते एकत्वादयो वि क्त्यर्थाः, 'अभिहिते प्रथमाऽभाव' इति प्रथमा ते न प्राप्नोति ॥ क ! पचत्योदनं देवदत्त इति ॥ किं कारणम् ? ॥ तिङोक्ता एकत्वादय इति

प्र.]भावोऽस्त्येवेत्यभिप्रायेणैतदुक्तम् । अभिहित इति । यदा वक्ष्यमाणनां क दीनां विभक्त्यर्थत्वं तदा प्रातिपदिकार्थेनापि प्रथमार्थेन भाव्यं,तस्य च प्रातिपदि नैवोक्तत्वाद्वृक्ष इत्यादौ प्रथमा न प्राप्नोति । एकत्वादीनां तु विभक्त्य तदभिधानाय प्रथमा प्रवर्तत एवेति दोषाऽभावः । प्रत्याख्यानवाद्याह क्वचिदिति । वचनसामर्थ्यात्प्रातिपदिकेनोक्तेऽपि तदर्थे प्रथमा भविष्यति द्वितीयादयस्त्वनभिहिते कर्मादौ सावकाशत्वादभिहिते न भविष्यन्ति तिङोक्ता इति । अनभिहितैकत्वाद्यभिधानाय तव विभक्तिविधानम् । पच

उ.]स्युरित्येतदर्थं स आवश्यकः । 'एकत्वादय' इत्यस्य ते एवेत्यर्थः । एवं 'सङ्ख्यारहितं चतुष्कं प्रातिपदिकार्थ' इति पक्षे सूत्रमावश्यकमित्युक्तं भवति, इत तरपक्षेषु च न कर्त्तव्यमिति। पञ्चकपक्षेपि सूत्रमावश्यकमिति बहुष्वितिसूत्रे भा कैयटयोः स्पष्टम्। पञ्चकपक्षे सुपां द्योतकत्वाद्वाचकद्योतकयोर्द्योतकयोश्च समुच्च दृष्टत्वादन्यभिहितेऽपि स्यादतः स आवश्यकः। वस्तुतस्तु 'एकत्वादयो विभक्त्य' इत्यस्य सूत्रे प्राधान्येन विभक्तिद्योत्यत्वेन बोधिता इत्यर्थः । एवं 'कर्मादयो वि क्त्यर्था' इत्यस्यापि । यद्यपि द्योतकविषये क्वचिद्विवद्धं सुबद्धमितिन्यायेन समावे दृष्टस्तथापि प्रकृते लक्ष्यानुसाराडुक्तार्थानामित्येवाश्रीयते । परन्त्वयं न्यायः सूत्रो प्रधानविषय इति भावः। उक्तार्थानामिति न्यायस्य द्योतकविषयेपि सञ्चारो दृष्टः ऽधिपरी इति सूत्रे भाष्ये।'अपूपौ द्वा'वित्यादौ व्यभिचारश्च तत्रैवोक्तः। ननु प्रा न्यादेकत्वादीनामेव निमित्तत्वं न कर्मादीनामत आह—कर्माद्याश्रितानामिति माभूवन्नितीति। वाक्यसमाप्तावितिशब्दः।भाष्ये—तेष्वभिहितेषु सामर्थ्यादिति सामर्थ्यमत्रोक्तार्थानामप्रयोगरूपम्।स्वपक्षे नायं दोष इत्याह—एकत्वादीनां तिङ द्वितीयादिषु वैषम्यं दर्शयति—द्वितीयादयस्त्विति। अनभिहितैकत्वाद्यभिधा येति।प्रातिपदिकार्थसूत्रे उपस्थितानभिहित इत्यस्य प्रातिपदिकार्थविशेषणत्वाऽस वेनैकत्वादिविशेषणत्वमिति भावः । कर्तुरेकत्वमिति । येऽपि क्रियायामेव तिङ

१ 'प्वनभिहि' । २ 'मुत्पत्तिर्भवि' । ३ तस्य प्राप्नो' । ४ 'वाचकयोर्द्योतक'

अनभिहिताधिकारं च त्वं करोषि, परिगणनं च ॥ न क्वचित्तिङैकत्वादीनामनभिधानम्, उच्यते च प्रथमा। सा वचनाद्भविष्यति ॥ ननु चेहानभिधानं–वृक्षः प्लक्ष इति ॥ अत्राप्यभिधानमस्ति ॥ कथम् ? ॥ वक्ष्यत्येतत्–'अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्ती'ति। वृक्षः प्लक्षः। 'अस्ती'ति गम्यते। तवैव तु खल्वेष दोषो यस्य ते कर्मादयो विभक्त्यर्था अभिहिते प्रथमाभाव इति,–प्रथमा ते प्राप्नोति॥ क्व ?॥ 'कटं करोति भीष्ममुदारं शोभनं दर्शनीय'मिति। कटशब्दादुत्पद्यमानया द्वितीययाऽभिहितं

प्र.]च कर्तुरेकत्वं तिङाऽभिहितमिति प्रथमा न स्यादित्यर्थः।परिगणनं चेति। तिङ्कृत्तद्धितसमासैरित्येतत्। अत्र च तिङाऽस्त्वेकत्वस्याभिधानमिति प्रथमाया अप्रसङ्गः। आरम्भवाद्याह–न क्वचिदिति। सर्वत्र च पदमपेक्षितक्रियापदमेव प्रयुज्यते। उच्यते चेति। प्रातिपदिकार्थसूत्रेणेत्यर्थः। भवन्तीपर इति। लट्पर इत्यर्थः। ततश्च 'वृक्ष' इत्यत्रापि तिङैकत्वस्याऽभिधानादनवकाशत्वात्तिङाऽभिहितेऽप्येकत्वादौ प्रथमा भवति। एवमारम्भवादी स्वपक्षे दोषं परिहृत्य परपक्षे तमुद्भावयति–तवैवेति। भीष्ममिति। भीष्मादिविशेषणविशिष्टस्य कटस्य करोतिक्रिययेप्सिततमत्वात्कर्मत्वं, तच्च कटशब्दादुत्पन्नया द्वितीययाऽभिहितमिति भीष्मादिभ्यो द्वितीयाया अप्रसङ्गात्प्रथमा प्राप्नोति।आरम्भवादिनस्तु परिगणनारम्भात् कटशब्दादु-

उ.]च्यकारकगतसङ्ख्यामारोप्य तत्रैव तिङर्थसंख्यान्वय इति वदन्ति, तेषामपि आरोपमूलतया सोक्तप्रायैवेति बोध्यम्। अन्यथा तिङर्थाश्रयगताया उक्तत्वेऽपि चैत्रत्वविशिष्टरूपनामार्थगताया अनुक्तत्वेन तदसङ्गतिरेव स्यात्। न च क्रियायाः स्वत एकत्वेन तदारोपानपेक्षत्वेन कर्तृगतैकत्वस्य कथमुक्तत्वम्। तस्यापि साधने द्वित्वाद्यभावबुद्धिनिमित्तके तदनारोपे सत्त्वात्। अन्यथा 'पचत' इत्यादौ द्विवचनाद्यनापत्तिः। मम तु आरोपितयाऽप्युत्तरसङ्ख्यया पूर्वसङ्ख्यायां बाधान्न दोषः। आवृत्तिगतसंख्यारोपेण सहस्रदक्षिणत्वादिवत्। एवं च द्वित्वाद्यभावबुद्धौ द्रव्यस्य निःसंख्यत्वाऽभावेन साधने एकत्वमवगतमेवेति भाष्याशयात्। ननु तिङ्सुपोर्युगपत्प्रवृत्तेर्वक्तुं शक्यत्वेन 'तिङोक्ता' इत्यसङ्गतमत आह भाष्ये–परिगणनं चेति। तथा च तिङ्कृदित्यादिपरिगणनबोधितापवादविषयपर्यालोचनया तिङुत्पत्तिपर्यन्तं सुप्प्रतीक्षत इत्यर्थः। 'अस्तिर्भवन्तीपर' इत्यस्य न्यायसिद्धत्वमाह–सर्वत्र चेति। द्व्येकयोरिति सूत्रस्याऽन्यत्र सावकाशत्वात्सामर्थ्याऽसिद्धिमाशङ्क्याह प्रातिपदिकार्थसूत्रेणेति।'अभिहिते प्रथमाभाव' इति भाष्यस्याऽभिहिते प्रथमाया भावस्य प्रवृत्तेस्त्वयाऽङ्गीकारादित्यर्थः। भीष्मादीनामपि कर्मत्वात्कथं प्रथमाप्राप्तिरत आह–विशेषणविशिष्टस्य कटस्येति। प्रधानगतकर्मत्वोक्तौ विशिष्टगतमपि तदुक्त-

१ 'धिकारं त्वञ्चकरोषि'। २ क्वचिन्न। ३ 'दर्शनीयं शोभन'।

कर्मेति कृत्वा भीष्मादिभ्यो द्वितीया न प्राप्नोति ॥ का तर्हि प्राप्नोति ! प्रथमा ॥ तद्यथा-'कृतः कटो भीष्म उदारः शोभनो दर्शनीयः' इति क्तेनोत्पद्यमानेन क्तेनाऽभिहितं कर्मेति कृत्वा भीष्मादिभ्यो द्वितीया न भवति। का तर्हि ? ॥ प्रथमा भवति ॥ नैष दोषः । न हि ममाऽनभिहिताधिकारोऽस्ति,नापि परिगणनम् । सामर्थ्यान्मे विभक्तीनामुत्पत्तिर्भविष्यति । किं च सामर्थ्यम् ॥ किम् ? ॥ कर्मविशेषो वक्तव्यः ॥ अथ वा कटोपि कर्म

प्र.]त्पन्नया द्वितीययाऽभिहितेऽपि कर्मणि भीष्मादिभ्यो द्वितीया सिध्यतीति न दोषः कर्मविशेष इति । भीष्मादियुक्तकटसंबन्धि कर्मत्वं प्रतिपाद्यं । तत्र च यथा कटशब्देन भीष्मत्वादीनामनभिधानात्तदभिधानाय भीष्मादिशब्दप्रयोगस्तथा द्वितीयापि तेभ्यो भविष्यति । नह्यन्यथा तद्विशिष्टत्वं कटस्य प्रत्याययितुं शक्यते। कर्म चेति। यद्यत्करोतिक्रिययाऽऽप्तुमिष्टतमं तत्सर्वं कर्म,द्रव्यं गुणश्च।न ह्यसौ कटमात्रेण संतुष्यति। तत्र करोतिक्रियायां पृथक्सर्वेषां कर्मत्वे प्रत्येकं द्वितीयोत्पत्तिः,पश्चात्

उ.] मेव, विशिष्टस्य तदपेक्षयातिरिक्तत्वाऽभावादिति शङ्कितुरभिमानः ।

आरम्भे दोषाऽभावमाह-आरम्भवादिनस्त्विति । भाष्ये-सामर्थ्यादिति भीष्मादिपदानामपि द्वितीयोत्पादकसामर्थ्यसत्त्वादित्यर्थः । विशिष्टस्य कर्म विशेषणस्यापि द्वितीयोत्पादककर्मत्वशक्तिरूपसामर्थ्यवत्त्वम् । अन्यथा विशि कर्मेत्युक्तिव्याघातः । तच्च न कटपदोत्तरद्वितीययाऽभिहितमिति भावः तदाह-तत्र च यथेत्यादिना । विशिष्टगतैककर्मत्वप्रतिपादनेच्छया प्रयोगः, तत्प्रतिपादनं च नोभयत्र द्वितीयां विनेति भावः । अत्र पक्षे भीष्मा रकर्मत्वाद्यनालिङ्गितशुद्धगुणस्यैवोपस्थितिरितरस्य तद्वैशिष्ट्यप्रतीतौ पश्चाद्विशि ककर्मत्वशक्तिमत्तयोपस्थितिः।तथोपस्थितौ च भीष्माद्युत्तरद्वितीयाऽपि सहकारि तात्पर्यम् । तदाह-नह्यन्यथेति । 'तद्विशिष्टत्वं कटस्ये'त्यनन्तरं-'विशि कर्मत्वं चे'ति शेषः । यथा कटं करोतीत्यत्र विशिष्टकर्मत्वं न प्रतीयते।एवं 'भी कटं करोती'त्यत्रापि विभिन्नविभक्तित्वाद्विशिष्टाऽप्रतीत्या तन्न प्रतीयत इति भाव पश्चादिति । तथा च न विशिष्टस्य कर्मत्वं किं तु क्रियायां कर्मत्वेनान्वि मनसा विशेषणविशेष्यभावबोध इति भाव इत्येके । परे तु साक्षात्फलाश्रयत्वे द्रव्यद्वारा फलाश्रयादेरपि कर्मत्वादिकम् । एवं च भीष्मस्यापि पृथक्कर्मशक्तिवि ष्टस्यैव बोधनं भीष्मपदात् । द्रव्येणाऽभेदान्वयात्तु तस्याः शक्तेर्न क्रियार्थबोधे वि ष्याऽग्रहः, भीष्मकटयोर्बोधश्च विशेषणविशेष्यभावेनैव । 'कारकाणां भावना' इत्यस्य च साक्षात्स्वशक्तिनियामकाश्रयद्वारा वेत्यर्थान्न तद्विरोधः।तदेव ध्वनयन्

१ 'स ममा' ।

भीष्मादयोपि, तत्र 'कर्मणी'त्येव सिद्धम्॥ अथवा कट एव कर्म, तत्सामानाधिकरण्याद्भीष्मादिभ्यो द्वितीया भविष्यति ॥ अस्ति खल्वपि विशेषः— 'कटं करोति भीष्ममुदारं शोभनं दर्शनीयं'मिति चे,'कृतः कटो भीष्म उदारः शोभनो दर्शनीय' इति चे करोतेरुत्पद्यमानः क्तोऽनवयवेन सर्वं कर्माभिधत्ते, कटशब्दात्पुनरुत्पद्यमानया द्वितीयया यत्कटस्थं कर्म तच्छक्यमभिधातुं

प्र.]कवाक्यतया विशेषणविशेष्यभावः। यद्यपि गुणद्रव्यो करोतिना संवन्धस्तथापि तमप् श्रुत्या प्रकर्षस्याश्रितत्वाद्द्रव्यस्यैव क्रियान्तर उपयोक्ष्यमाणत्वादीप्सिततमत्वात्तस्यैव कर्मसंज्ञा, न गुणस्येति मत्वाह–अथ वेति। तत्सामानाधिकरण्यादिति। भीष्मादीनां स्वयमकर्मत्वेपि विशेष्यसंबन्धिन्यैव विभक्त्या भाव्यम्। तदेकयोगक्षेमत्वात्। केवलानां च प्रातिपदिकानां परश्चेति नियमादप्रयोगार्हत्वात्। ततो यथेश्वरसुहृदः स्वयं निर्द्धना अपि तदीयेन धनेन तत्फलभाज एवं गुणा अपि। क्तप्रत्ययेन द्वितीयाया वैधर्म्यं दर्शयति–अस्ति खल्वपीति। अनवयवेनेति। साकल्येन। सर्वमिति। भीष्मादिगुणगतमपीत्यर्थः। कटस्थमिति। प्रातिपदि-

उ.]आह–'क्रियायां पृथक् सर्वेषां कर्मत्वे प्रत्येकं द्वितीयोत्पत्तिः,पश्चात्त्वेकवाक्यतया विशेषणविशेष्यभाव' इति। पश्चादित्यस्य द्वितीयोत्पत्त्यनन्तरमित्यर्थः। अक्षरस्वारस्यात्। 'पृथक्सर्वेषां कर्मत्वे' इत्यस्य च 'साक्षात्परम्परया वे'ति शेषः। 'द्रव्यगुणयोः करोतिना संबन्ध' इत्यत्रापि स एव शेषः पूरणीयः। संबन्धश्च तदर्थफलाश्रयत्वरूपः। एतेनाऽत्र पक्षे प्रथमं सर्वेषां भावनान्वयः पश्चात्पार्ष्णिकैः परस्परं मनसा विशेषणविशेष्यभावबोध इति परास्तम्। ज्ञानद्वयकल्पनागौरवाच्चाऽननुभवाच्च एकवाक्यतयेति कैयटेन शाब्दस्यैव विशेष्यविशेषणभावस्य स्वीकाराच्चेत्याहुः। क्रियान्तरे–तद्विशेषे आसनशयनादिरूपे। ईप्सिततमत्वादिति। साक्षात् क्रियान्वय्येव हीप्सिततमम्। एवं करणसंज्ञाऽपि साधनतमत्वाद्द्रव्यस्यैवेत्यादि बोध्यम्। परंत्विदं चिन्त्यम्, 'अश्वेन पथा दीपिकया व्रजती'त्यादौ सर्वेषां करणत्वाऽनापत्त्या कारकान्तरापेक्षयैव प्रकर्षो,न तु स्वकक्षायामपीति स्वयमेवोक्तत्वात्। 'गां पयो दोग्धी'त्याकडारसूत्रभाष्याऽसङ्गतेश्चेति दिक्। अथवेति। सामानाधिकरण्यं नाम–अनेकस्य पदस्य विशेष्यतयैकार्थबोधकत्वं, यदि भिन्नशक्तित्वं स्यात्तदा शक्तिभेदेनाऽर्थस्यापि भेदादेकार्थत्वं भज्येत। तस्माद्विशेष्यसमानशक्तिकत्वं तदभिन्नविशेषणानामिति नियमात्तत्समानविभक्तिकत्वमेव। फलाश्रयत्वादिवत्तत्समानाधिकरणत्वमपि विभक्त्युत्पत्तौ नियामकमिति तदुपपादयति—ततो यथेति। यथा मैत्रीभङ्गभिया सधनो निर्धनस्य स्वधनेन स्वसमानवासोऽलङ्कारादीन्

१ 'दर्शनीयं शोभन'। २ क्वचिन्न। ३ 'पार्ष्ठिकः'। ४ 'वेति'।

न हि कर्मविशेषः॥ तवैव तु खल्वेष दोषो [ यस्य ते एकत्वादयो विभक्त्यर्थाः 'अभिहिते प्रथमाऽभावः' इति प्रथमा ते न प्राप्नोति ॥ क ? ॥ एको द्वौ बहव इति॥ किं कारणम् ? ॥ प्रातिपदिकेनोक्ता एकत्वादय इति ॥ कर्मादि- ष्वपि वै विभक्त्यर्थेष्ववश्यमेकत्वादयो निमित्तत्वेनोपादेयाः—कर्मण एकत्वे

प्र.] कार्थगताया एव कर्मशक्तेर्वाचिका द्वितीयेत्यर्थः। न कर्मविशेष इति। भीष्मादि- गुणगतं कर्मत्वमभिधातुं न शक्यमित्यर्थः। एवं युक्त्या प्रत्याख्यानवादी स्वपक्षे दोषं परिहृत्य परपक्षे दूषणमाह—तवैवेति। एष दोष इति। वक्ष्यमाणः। प्राति- पदिकेनोक्ता इति। अनभिहितैकत्वाद्यभिधानाय तत्र विभक्तिविधानं, तानि चैक- दिभिरेवोक्तानीति प्रथमाया अप्राप्तिः। आरम्भवादी परस्य तुल्यदोषतामाह—कर्मा- दिष्वपीति। यस्यापि कर्मादयो विभक्त्यर्थास्तेनाप्येकवाक्यता 'बहुषु बहुवचन'- मित्यादेः 'कर्मणि द्वितीये'त्यादीनाञ्चाभ्युपगन्तव्या। गुणप्रधानभाव एव तु तत्र विपरीतः। तत्र प्रातिपदिकार्थगतैकत्वादिविशिष्टे कर्मणि द्वितीयेत्येवमादिर्वाक्यार्थ- स्तस्य संपद्यते। कर्मण एकत्वे इति। नन्वेकत्वादीनां विशेषणत्वमभिधानेन, कर्मादीनाञ्च विशेष्यत्वं, तत्र कस्मात्कर्मणो विशेषणत्वं प्रतिपाद्यते। नैष दोषः- प्रातिपदिकार्थस्यैकत्वे सति तद्विशिष्टस्य कर्मणो वाचिका द्वितीयेत्ययमत्रार्थो विव-

उ.] करोति एवं सामानाधिकरण्यभङ्गभिया स्वशक्तिं तत्रारोप्य स्वसमानविभक्तिकत्वं संपादयतीति भावः। नन्वेवमेव 'कृतः कट' इत्यादावपि भीष्मादिभ्यो द्वितीया स्यादत आह भाष्ये—अस्ति खल्वपीति। भीष्मादिगुणगतमित्यस्य तद्गुणविशिष्ट- गतमित्यर्थः। गुणगतं कर्मत्वमिति। भाष्ये कर्मशब्दः शक्तिपर इति भावः। अयं भावः—क्तस्य धातोरुत्पत्त्या प्रकृतिगतकर्माऽभावादन्यगते तत्राऽभिधाने यद्यत्प्रकृतिवाच्यक्रियानिरूपितकर्मत्वशक्तिमत्तत्सर्वगता साऽभिधीयत इति युक्तम्। द्वितीयायाः प्रातिपदिकादुपपत्त्या स्वप्रकृतिभूतप्रातिपदिकार्थकर्मत्वलाभात्तदेव बोध्यं नान्यदिति। 'भीष्मं कट'मित्यादौ आरम्भवादे पूर्वोक्तप्रथमाप्राप्तिरूपदोषाऽभावा- देष इत्यनुपपन्नमत आह—वक्ष्यमाण इति। तिङभिहिते वचनसामर्थ्याद्दोषपरिहारेऽपि प्रकृत्यभिहिते दोषः, तयाऽनभिहितैकत्वादिके वृक्ष इत्यादौ तस्याश्चारितार्थ्यमि- त्याह—अनभिहितैकत्वादीति। 'एकं पश्ये'त्यादौ द्वितीया तु कर्मणोऽनभिहित- त्वादेकत्वे उक्तेपि भविष्यतीति मत्वा प्रथमाऽभावापत्तिरेव कृता। ननु कर्मादीनां विभक्त्यर्थत्वे एकत्वादीनां निमित्तत्वं कथमतस्तदुपपादयति—यस्यापीति। प्राति- पदिकार्थगतैकत्वादिविशिष्टे कर्मणीति। सामानाधिकरण्यसम्बन्धेनैकत्वविशिष्ट- कर्मशक्तावित्यर्थः। वाचिकेति। बोधिकेत्यर्थः। द्योतकत्वपक्षस्यैवोचितत्वात्, एक-

१ क्वचिन्न। २ कोष्ठान्तर्गतः पाठः क्वचिन्न। ३ 'स्याऽर्थगतधर्माभावात्तद्गते तत्रा'

कर्मणो द्वित्वे, कर्मणो बहुत्वे इति। न चैकत्वादीनामेकत्वादयः सन्ति। अथ सन्ति, ममापि सन्ति। तेष्वनभिहितेषु प्रथमा भविष्यति॥ अथ वोभयवचना ह्येते द्रव्यं चाहुर्गुणं च। यत्स्थोऽसौ गुणस्तस्यानुक्ता एकत्वादय इति कृत्वा प्रथमा भविष्यति। अथ वा सङ्ख्या नामेयं परप्रधाना, सङ्ख्येयमनया विशेष्यम्। यदि चाऽत्र प्रथमा न स्यात् सङ्ख्येयमविशेषितं स्यात्। अथ वा वक्ष्यति तत्र वचनग्रहणस्य प्रयोजनम्—'उक्तेष्वप्येकत्वादिषु प्रथमा यथा स्या'दिति। अथ वा समयाद्भविष्यति॥यदि सामयिकी, न नियोगतः,अन्याः

प्र.]क्षितः।ततश्च प्रातिपदिकार्थव्यतिरेकेणान्येषामेकत्वादीनां विशेषणीभूतानामभावादेक इत्यादौ भवतोपि प्रथमा न स्यादित्यर्थः। अथ सन्तीति। व्यतिरिक्तानीत्यर्थः। तदुक्तं हरिणा—'निमित्तमेक इत्यत्र विभक्त्या नाभिधीयते। तद्गतस्तु यदेकत्वं विभक्तिस्तत्र वर्त्तते।'इति। यथा शतमित्यत्र प्रवृत्तिनिमित्तं शतसङ्ख्याऽन्या,अन्या च विभक्तिवाच्या प्रातिपदिकार्थगतैकत्वसङ्ख्या,तथैक इत्यत्रापि प्रवृत्तिनिमित्तविभक्तिवाच्ये द्वे एकत्वे। एवं शब्दशक्त्याश्रयेणैकत्वादिभेदेनैव समाधायाऽभेदपक्षेपि समाधातुमाह—अथ वेवि। गुणोपसर्जनं द्रव्यं प्रातिपदिकेनाभिधीयते। द्रव्योपसर्जनस्तु गुणो विभक्त्यर्थः। यथा शौक्ल्यमिति गुणोपसर्जनद्रव्याभिधायिनः शुक्लशब्दाद्द्रव्योपसर्जने तस्मिन्नेव गुणे भावप्रत्ययः। यत्स्थोऽसाविति। यस्मिन्नेव द्रव्ये स्थित एकत्वादिगुणस्तस्य द्रव्यस्याऽनुक्ता एकत्वादयः प्राधान्येनेति भावः। सङ्ख्येयमविशेषितमिति। केवलस्य प्रातिपदिकस्य प्रयोगाऽभावात्प्रथमाया अभावे एकादिशब्दानुच्चारणात्। एवं युक्त्या प्रथमोत्पत्तिं प्रतिपाद्य

उ.]त्वादीनां विशेषणतयैव भानात्। एवं चैकत्वविशिष्टे प्रातिपदिकार्थे प्रथमेत्यर्थे तदपेक्षयाऽतिरिक्तं यत्रैकत्वं वृक्ष इत्यादौ तत्रैव स्यान्न त्वेक इत्यादावित्याह—ततश्चेति। 'उक्तार्थाना'मित्यत्र प्रधानाऽर्थविषयत्वादेकत्वे उक्तेऽपि प्रधानकर्माभिधानाय द्वितीयादीनामेतन्मतेऽपि सिद्धिरिति तद्दनापत्तिर्नाऽकारि।एतद्भाष्यं हरिणाप्येवमेव व्याख्यातमित्याह—तदुक्तमिति। निमित्तम्—प्रवृत्तिनिमित्तम्। द्वे एकत्वे इति। द्वयोरपि तयोर्ब्राह्मणौ द्वावित्यादाविवैकरूपेणैव भानान्न बोधावृत्त्यनुभवविरोधौ। इयं च कल्पना शब्दशक्त्याश्रयेत्याह—एवं शब्देति। अत्रापि पक्षे प्रातिपदिकेनैकत्वविशिष्टद्रव्याभिधानाद्दोषस्तदवस्थोऽत आह—गुणोपसर्जनमिति। द्रव्योपसर्जन इति। गुणगुणिनोरभेदाच्चैकः पट इति सामानाधिकरण्यम्। ननु प्रातिपदिकस्यैकत्वादिविशिष्टे शक्त्या तेनैव द्रव्यं विशेषयितुं शक्यं,किं तत्र विभक्त्येत्यत आह—केवलस्येति। अयं भावः—वृद्धव्यवहाराच्छक्तिग्रहः, वृद्धव्यवहारश्च

१ 'समयाद्वे'तिवार्त्तिकमत्र लुप्तं स्यात्। २ 'यिकी विभक्तिर्न नि'।

कस्माच्च भवन्ति?॥कर्मादीनामभावात्॥षष्ठी तर्हि प्राप्नोति। शेषलक्षणा ... अशेषत्वान्न भविष्यति ॥ एवमपि व्यतिकरः प्राप्नोति—एकस्मिन्नपि द्विवचन बहुवचने प्राप्नुतो, द्वयोरप्येकवचनबहुवचने प्राप्नुतो, बहुष्वप्येकवचनद्विवचने प्राप्नुतः ॥ अर्थतो व्यवस्था भविष्यति ॥ परिगणनं कर्तव्यम् ॥*॥ तिङ्त द्धितसमासैः परिसङ्ख्यानम् ॥*॥ तिङ्क्तद्धितसमासैः परिसङ्ख्यानं कर्तव्य

प्र.]वचनेन प्रतिपादयितुमाह—अथ वेति। समयादिति । 'परश्चे'त्यस्मात्प्रत्ययं प्रकृतिः प्रयोक्तव्या न केवलेत्येवंरूपादित्यर्थः। कर्मादीनामिति । 'कर्मण्येव द्वि ये'त्येवं द्वितीयादीनां नियतत्वात् । षष्ठी तर्हीति । कर्माद्यभावः शेष इति भा अशेषत्वादिति । प्रातिपदिकार्थस्य प्रथमाविधावुपयोगात्तस्य चाऽव्यतिरिक्त सद्भावात् । अर्थतो व्यवस्थेति । सामर्थ्यादित्यर्थः । 'एक' इत्यत्रैकमेवैकत्वं, प्रातिपदिकेनाभिहितमित्यप्राप्ता प्रथमा समयवशेन प्राप्यते । तत्र यथा सम पालितो भवत्येकत्वानुगुणं चाऽन्यत्र तदभिधाने दृष्टसामर्थ्यं वचनं भवति, कर्तव्यमित्यर्थः । तदेवं सङ्ख्या विभक्त्यर्थ इति दर्शनाश्रयेण सूत्रं स्थापित

उ].विभक्त्यन्तेनैवेति विभक्तिसमभिव्याहृते गृहीतायाः शक्तेस्तदभावेऽनुद्बोधात नुपस्थित्या सङ्ख्येयमविशेषितम् । एवं च पदार्थोपस्थित्यन्यथाऽनुपपत्त्याऽभिहि विभक्त्युत्पत्तिरिति। लोकव्यवहारे प्रयुज्यमानानामेव साधूनां साधुत्वान्वाख्या मिदं शास्त्रमिति वृद्धव्यवहारे एव किं मूलमिति न शङ्क्यम् । भाष्ये—न निय इति । न नियमत इत्यर्थः । प्रातिपदिकार्थस्याऽशेषत्वात्कथं तत्र षष्ठीत्यत कर्मादीति । तावन्मात्रमेव शेष इत्यभिमानः । अव्यतिरिक्तस्येति । अतिरि विशिष्टो व्यतिरिक्तस्तदभिन्नस्येत्यक्षरार्थः । एवं च 'कारकप्रातिपदिकार्थव्यतिरि शेष' इति नाऽत्र षष्ठी, तदतिरिक्तस्य कस्याप्यप्रतीतेरिति भावः । अर्थ समयपरिपालनाय विभक्तौ कथमर्थतो व्यवस्थेत्यत आह—सामर्थ्यादिति । तदे पपादयति—एक इत्यत्रेति । विरुद्धविभक्त्यपेक्षयाऽनुवादकविभक्तिर्न्याय्येति पक्षद्वयेऽपि दोषाऽभावप्रतिपादनात्सङ्ख्या सुबर्थ इति दर्शने सूत्रं कार्यं, दर्शनान्तरे स्थितम्। तत्रारम्भपक्षे परिगणनादिप्रवृत्तिं बोधयितुमाह—तदेवमिति।सङ्ख्या वि क्त्यर्थ इति। सूत्रे प्राधान्यात्तस्या विभक्तिद्योत्यता,कारकं तु तद्विशेषणत्वेन दर्शनमित्यर्थः।भाष्ये—तिङ्क्रियते कट इति। न चात्र सङ्ख्याकारकयोरुभयोरु 'सङ्ख्या विभक्त्यर्थ'इति पक्षेपि नेदमनभिहिताधिकारप्रयोजनमिति तिङ्ग्रहणं मितिवाच्यम्।सङ्ख्यायाः क्रियायामेवान्वयेन कारकगतसङ्ख्यायाः शब्देनानभिधा त्याशयः । एवं च 'पचत्योदनं देवदत्त' इत्यादौ 'तिङोक्ता एकत्वादय' इति

१ अर्थतो व्यवस्था' इति वार्त्तिकमत्र लुप्त मित्यन्ये । २ क्वचिन्न । ३ 'त्यर्थः'

